सूतसंहितायां :—

उद्धूलनं त्रिपुण्ड्रञ्च ज्ञानाङ्गत्वेन सादरम् ।
आमनन्ति मुनिश्रेष्ठाश्वेताश्वतरशाखिनः ॥

अयमत्याश्रमो धर्मो यैस्समाचरितो मुदा ।
तेषामेव शिवज्ञानं संसारच्छेदकारणम् ॥

पुनस्साक्षाज्जीवज्ञानसिद्ध्यर्थं मुनिपुंगवाः ।
अग्निहोत्रसमुत्पन्नभस्माऽदायादरेण तु ॥

निधाय पात्रे शुद्धे तत् पादौ प्रक्षाल्य वारिणा ।
द्विराचम्य मुनिश्रेष्ठास्सपवित्रास्समहिताः ॥

ओमापस्सर्वमित्येतन्मन्त्रमुच्चार्य भक्तितः ।
ध्यात्वा विष्णुं जलाध्यक्षं गृहीत्वा भस्मवारिणा ॥

विमृज्य मन्त्रैर्जाबालैरग्निरित्यादिसप्तभिः ।
समाहितधियश्शुद्धाश्शिवं ध्यात्वा शिवामपि ॥

समुद्धूल्य मुनिश्श्रेष्ठा आपादतलमस्तकम् ।
सितेन भस्मना तेन ब्रह्मभूतेन भावनात् ॥

ललाटे हृदये कुक्षौ दोर्द्वन्द्वे च सुरोत्तमाः ।
त्रिपुण्ड्रधारणं कृत्वा ब्रह्मविष्णुशिवात्मकम् ॥

तत्रैव –

वैराग्यातिशयेनैव मोक्षकामेन वै पुनः ।
निरस्य सर्वकर्माणि शान्तो भूत्वा मुमुक्षया ॥

विरजानलजं भस्म गृहीत्वा वाऽग्निहोत्रजम् ।
अग्निरित्यादिभिर्मन्त्रैर्षड्भिराथर्वणैः क्रमात् ।
विमृज्यांगानि मूर्धादिचरणान्तानि सादरम् ॥

समुद्धूल्य सदाचार्यं प्रणिपत्यात्मविद्यया ।
संसारसागरं घोरं लंघयाम्यहमात्मनः ॥ (लंघयेदात्मविद्यया)

पराशरोपपुराणे :–

वेदवेदान्तनिष्ठानां भस्मनैवावकुण्ठनम् ।
संयक् ज्ञानप्रदं शीघ्रं सत्यमुक्तं न संशयः ॥

तत्रैव :—

उद्धूलनं त्रिपुण्ड्रञ्च येनैवाचरितं मुदा ।
तस्यैव ब्रह्मविज्ञानं जायतेह्यचिरेण तु ॥

तस्मान्मुमुक्षुस्सततं शान्तिशान्त्यादिभिस्सह ।
उद्धूलनं त्रिपुण्ड्रञ्च श्रौतं नित्यं समाचरेत् ॥

सूतसंहितायां :–

ज्ञानांगेभ्यस्समासेन भस्मैवैकं परं मतम् ।
भस्मसाधननिष्ठानां साक्षाद्भस्म शिवाभिधम् ॥
प्रकाशते यथा शान्त्या शान्तं वस्तु परात्परम् ॥ इति ॥

शङ्करसंहितायाम् :–

उद्धूलनं त्रिपुण्ड्रञ्च ज्ञानाङ्गत्वेन सादरम् ।
आमनन्ति मुनिश्श्रेष्ठा श्वेताश्वतरशाखिनः ॥

उद्धूलनं त्रिपुण्ड्रञ्च संयगज्ञाननाशकम् ।
आमनन्ति मुनिश्रेष्ठाऽथर्वशिरसि स्थिताः ॥ इति ॥

येन पाशुपतं संयग्व्रतमाचरितं द्विजाः ।
तस्य ज्ञानं विजायेत घनाज्ञाननिवारकम् ॥ इति च ॥

सौरसंहितायाम् :—

अथातस्संप्रवक्ष्यामि तवाहं करुणाबलात् ।
ज्ञानोपायं समासेन वेदेनैव प्रदर्शितम् ॥

शान्तिर्दान्तिश्च सन्न्यासः परहंससमाह्वयः ।
द्वन्द्वादीनां सहित्वमेकाग्र्यं भस्मकुण्ठनम् ॥
(द्वन्द्वादीनामसाहित्यमेकाग्र्यं भस्मकुण्ठनम्)

त्रिपुण्ड्रधारणं तिर्यक् श्रद्धा रुद्रस्य पूजनम् ॥

तत्रैव —

सर्वशाखासु वस्त्वेकं शिवाख्यं सत्यचिद्घनम् ।
तथा तद्विषयं ज्ञानं तथैव च शिरोव्रतम् ॥

सर्वशाखाश्रुतन्तत्वं विज्ञातुं प्रयते तु यः ।
आचरेत्सविशेषेण नित्यं प्रीत्या शिरोव्रतम् ॥

शिरोव्रतविहीनस्तु सर्वधर्मसमन्वितः ।
अपि ब्रह्मात्मविद्यायां नाधिकारी न संशयः ॥

शिरोव्रतमिदं सर्वं पापकान्तरदाहकम् ।
साधनं शुद्धविद्यायास्ततस्तत् सम्यगाचरेत् ॥

अग्निरित्यादिभिर्मन्त्रैः षड्भिश्शुद्धेन भस्मना ।
सर्वाङ्गोद्धूलनं कुर्याच्छिरोव्रत समाह्वयम् ॥

एतच्छिरोव्रतं कुर्यात्संध्याकालेषु सादरम् ।
यावद्विद्योदयस्तावत्तस्य विद्याखलूत्तमा ॥

अथ वरिष्ठत्वं सूतसंहितायाम् ।
अतश्च संक्षेपमिदं वदामि श्रुतिप्रमाणं शिव एव केवलः ।
वरिष्ठ उक्तस्सित भस्मकुण्ठनं विशुद्धविद्या च नचेतरत्परम् ॥

पराशरोपपुराणे :—

सर्वागमेषु निष्ठानां त्रिपुण्ड्रं भस्मकुण्ठनम् ।
वरिष्ठं सर्वलिंगेभ्य इति सत्यं मयोदितम् ॥

कौर्मे :—

सर्वेषामेव भक्तानां श्रौतलिंगमनुत्तमम् ।
सितेन भस्मना कार्यं ललाटे तु त्रिपुण्ड्रकम् ॥

शङ्करसंहितायाम् :—

यथा वेदस्य माहात्म्यं दुर्ज्ञेयं पार्वतीपतेः ।
तथैव भस्मनः प्रोक्तं वेदवेदान्तपारगैः ॥

बृहन्नारदीये :—

शिवप्रियाश्शिवासक्ताश्शिवपादार्चने रताः ।
त्रिपुण्ड्रधारिणो ये च ते वै भागवतोत्तमाः ॥ इति ॥

सौरसंहितायाम् :—

भस्मनोद्धूलनं तिर्यक् त्रिपुण्ड्रं शिवपूजनम् ।
प्राधान्येन पुराणानि प्रवदन्ति हि सादरम् ॥ इति ॥

अत्याश्रमसमाख्यं यद्व्रतं पाशुपतं परम् ।
वेदान्तेषु समस्तेषु तत्सारं (पर)मुत्तमम् ॥

ब्राह्मणस्य विशेषेण धर्मो धर्मपरस्य च ।
भूत्यै वोद्धूलनं यच्च त्रिपुण्ड्रस्यैव धारणम् ॥ इति च ॥

अथ पापनाशकत्वं कालाग्निरुद्रोपनिषदि :—

त्रिपुण्ड्रं भस्मना करोति यो विद्वान्ब्रह्मचारी गृहस्थो वानप्रस्थो यतिर्वा समस्तमहापातकोपपातकेभ्यः पूतो भवति, सर्वान् देवान् ध्या(ज्ञा)तो भवति सततं रुद्रजापी भवति ॥

भारद्वाजस्मृतौ :–

"प्राङ्मुखश्चरणहस्तौ प्रक्षाल्याचम्य पूर्वत" इत्युपक्रम्य उद्धूलन-त्रिपुण्ड्रप्रकारं उक्त्वा उपसंहारे —

धृतमेतत्त्रिपुण्ड्रं स्यात्सर्वकर्मसु पावनम् ।
त्रिपुण्ड्रं धारयेन्नित्यं सर्वपापविशुद्धये ॥

बृहज्जाबालोपनिषदि :–

सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम् ।
स्त्रियं नपुंसकं गृध्रं बिडालं बकमूषिकम् ।
दृष्ट्वा तथा विधानन्यान्भस्मस्नानं समाचरेत् ।
त्यक्तवर्णाश्रमाचारो लुप्तवर्णक्रियोऽपि यः ।
सतुतिर्यक्त्रिपुण्ड्राङ्गो धारणात्सोपि मुच्यते ॥

पराशरोपपुराणे :–

भस्मशायी भवेन्नित्यं भस्मच्छन्नत्रिपुण्ड्रधृक् ।
रुद्राध्यायी भवेन्नित्यं मासमेकमतन्त्रितः ॥

प्रणवं वा जपेन्नित्यं सदा पञ्चाक्षरं तु वा ।
प्रायश्चित्तं भवेदेतद्रहस्यं स्यान्नसंशयः ॥

वासिष्ठलैंगे :–

अभक्ष्यभक्षणं येषां भस्मधारणपूर्वकम् ।
तेषान्तत्भक्ष्यमेवस्यान्मुने नात्र विचारणा ॥

भविष्यत्पुराणे :—

महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
भस्मस्नाननिषेवेन मुच्यते सर्वपातकैः ॥

वासिष्ठलैंगे :—

एवं भस्म धृतं येन तस्य पुण्यफलं श्रुणु ।
महापातकसंघाश्च पातकान्यपराण्यपि ॥
नश्यन्ति मुनिशार्दूल सत्यं सत्यं वदाम्यथा (म्यहम्) ॥

तत्रैव :–

यस्नाति भस्मना नित्यं जले स्नात्वा ततः परम् ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवादरात् ॥

सर्वं पापविनिर्मुक्तस्स याति परमां गतिम् ।
आग्नेयं भस्मनास्नानं यतिभ्यस्तु विधीयते ॥

आर्द्रस्नानात्परं भस्मस्नाद्ये जन्तुवधो ध्रुवम् ।
आद्यं तु प्रकृतिं विद्यात्प्रकृतिं वन्धनं विदुः ॥

प्रकृतेस्तु प्रहरणात् भस्मना स्नानमिष्यते ।
अहो मोहस्य माहात्म्यं यथा वक्तुं न शक्यते ॥

यन्नरा भस्मसूपायं त्यक्त्वान्यत्र विचेष्टते ।
वहुनोक्तेन किं भस्मधारणं मोक्षसाधनम् ॥

भस्मना नित्ययुक्तस्य ज्ञानमुत्पद्यते चिरात् ।
पातकी पातकान्मुक्तो भविष्यति न संशयः ॥

**नारदीयस्मृतौ :–**

त्रिपुण्ड्रधृग्विप्रवरो यो रुद्राक्षधरश्शुचिः ।
सहन्ति रोगदुरितव्याधिदुर्भिक्षतस्करान् ॥

**स्मृतिरत्नावल्याम् :—**

मध्यमानामिकाङ्गुष्ठैर्ललाटे यत्त्रिपुण्ड्रकम् ।
तत्त्रिपुण्ड्रं भवेच्छस्तं महापातकनाशनम् ॥

**स्मृतिभास्करे :–**

वनस्पतिं गते सोमे भस्मोद्धूलितविग्रहः ।
अर्चितं शंकरं दृष्ट्वा सर्वपापैः प्रमुच्यते ॥

अशुचिर्वाप्यनाचारो मनसा पापमाचरन् ।
शुचिरेव भवेन्नित्यं त्रिपुण्ड्रस्य च धारणात् ॥

पराशरोपपुराणे :–

भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ।
महापातकसंघाततमसश्छण्डभास्करः ॥

शिवधर्मे :–

रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्तितम् ।
ध्वंसनं सर्वदुःखानां सर्वपापविशोधनम् ॥ इति ॥

महापातकयुक्तो वा युक्तो वाप्युपपातकैः ।
भस्मस्नानेन तत्सर्वं दहत्यग्निरिवेन्दनम् ॥ इति च ॥

वायवीये :–

भस्मच्छन्नो द्विजोविद्वान्महापातकसंभवैः ।
दोषैर्विमुच्यते सद्यो मुच्यते नात्र संशयः ॥

तस्मात्सर्वेषु लोकेषु वीर्यवान्भस्मसंयुतः (भूषितः) ।
रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्तितम् ॥

भस्मनिष्ठस्य दह्यन्ते दोषा भस्माग्निसंभवात् ।
भस्मस्नानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः ॥

लैंगे :–

स्मरणादेव रुद्रस्य यथा पापं प्रणश्यति ।
तथाऽस्य धारणादेव सर्वं पापं प्रणश्यति ॥

यद्यत्कार्य ( यद्यकार्य ) सहस्राणि कृत्वा यस्स्नाति भस्मना ।
कृत्वापि ह्याकुलं पापं मृत्युकालेऽपि ये द्विजाः ।
भस्मशायी भवेत्किञ्चित्क्षिप्रं पापैः प्रमुच्यते ॥

सौरसंहितायाम् :–

अयत्नेनैव पापनां समस्तानां समासतः ।
शुद्धिहेतुं प्रवक्ष्यामि तवाहं करुणाबलात् ॥

वर्णाश्रमपरिभ्रष्टः श्रुत्युक्तेनैव वर्त्मना ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

अग्निकर्मपरित्यागी श्राद्धकर्मविवर्जितः ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

परदाराभिगामी च परद्रोही परार्थहृत् ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

पाषण्डोऽपि शुनःक्रुष्टः कलत्रस्यापराधकृत् ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

तैलतांबूलपिण्याकगव्यारामादिविक्रयी ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

ब्रह्मविष्णुशिवादीनान्देवानामपि दूषकः ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

मर्यादभेदकर्त्तीर्थदूषकः कुण्डकाशनः ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

भस्मधारणहीनश्च त्रिपुण्ड्रोद्धूलनात्मना ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

ऊर्ध्वपुण्ड्रांकुशाश्वत्थपत्रवर्तुललिंगधृक् ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

अंकितश्शङ्खचक्राद्यैश्शरीरे देवतायुधैः ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

ब्रह्महा मद्यपस्स्तेनः तथैवगुरुतल्पगः ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

न केवलं त्रिपुण्ड्रधारणं भस्मनिष्ठस्यैव पापनिवर्तकं -
किन्तु भस्मनिष्ठपूजितुरपि ॥

संहितान्तरे :–

त्रिपुण्ड्रधारिणः पादौ प्रक्षालयति यःपुमान् ।
सर्वपातकयुक्तोऽपि स सद्यः पूयते नरः ॥

त्रिपुण्ड्रधारिणे भिक्षाप्रदानेन हि केवलम् ।
सर्वपातकयुक्तोऽपि पूयते मानवोऽचिरात् ॥

अथ तापत्रयनिवर्तकत्वं नारदीयस्मृतौ —

मद्यं पीत्वा गुरुदारांश्चगत्वा स्तेयंकृत्वा ब्रह्महत्या च कृत्वा ।
भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते पातकेभ्यः ॥

ये घोरा राक्षसाः प्रेता ये चान्ये क्षुद्रजन्तवः ।
त्रिपुण्ड्रधारिणं दृष्ट्वा पलायन्ते न संशयः ॥

सूतसंहितायाम् —

त्रिपुण्ड्रं भस्मना स्कन्दे ललाटे च तथा हृदि ।
यो दधाति महाप्रीत्या तत्वं परिहरप्रभुम् (तं त्वं परिहरप्रभो) ॥

अग्निरित्यादिभिर्मन्त्रैर्भस्मनैवावकुण्ठनम् ।
यः करोति स्वकं देहं तत्वं परिहरप्रभुम् (तं त्वं वरिहरप्रभो ॥

मानवोपपुराणे –

त्रिपुण्ड्रधारिणं दृष्ट्वा भूतप्रेतपुरस्सराः ।
भीताः प्रकंपिताश्शीघ्रं गच्छन्त्येव न संशयः ॥

शङ्करसंहितायाम् —

य इदं धारयेद्भस्म मन्त्रितं विधिवन्नरः ।
काङ्क्षितान्यस्यसिद्ध्यन्ति नश्यन्ति दुरितान्यपि ॥

तत्रैव –

भूतप्रेतपिशाचाश्च राक्षसाः दुर्जनाः परे ।
भस्मदर्शनमात्रेण त्रस्ता धावन्ति दूरतः ॥
तथापस्मारकुण्ठाद्या नश्यन्ति व्याधयः क्षणात् ॥

ब्रह्मविष्णू शापयुक्तौ पुरोहितौप्रति राज्ञाप्रार्थितौ –

दधीचिः –

इति राज्ञोवचश्श्रुत्वा ऋषिः परमया मुदा ।
भस्मादाय ददौ पूतं भञ्जकं पापसन्ततेः ॥

तदादाय नृपश्श्रेष्ठो लेप(भ)यामास विप्रयोः ।
तदानीं ववृधे तस्य विशुद्धस्य वपुस्तराम् ॥
सुधर्मस्यापि रसना समजायत पूर्ववत् ॥

तदेतदद्भुतं दृष्ट्वा सर्वेऽप्याश्चर्यमाययुः ।
भस्मावलेपनाच्छापान्मुक्तावेतौ द्विजावुभौ ॥

ब्रह्मविष्णोरतो भस्ममहिमा केन वर्ण्यते ।
वज्रदेही महीपालस्तदाश्चर्यसमन्वितः ॥

दधीचिं तपसां श्रेष्ठं प्रणनाम महीतले ।
तावुभौ भ्रातरं विप्रं प्रणम्य ऋषिसत्तमम् ॥

भवता रक्षितावावां माहात्म्याद्भस्मनो मुने ।
ज्ञायते भवता भस्ममहिमा शंकरेण वा ॥

इत्युक्त्वा दण्डवद्भूमौ नमन्तौ तं च भूमिपम् ।
आशीर्भिर्योजयित्वाशु स्वाश्रयं प्रययौ मुनिः ॥

वायवीये –

भूतप्रेतपिशाचाद्याः रोगाश्चातीव दुस्सहाः ।
भस्मनिष्ठस्य सान्निद्ध्याद्विद्रवन्ति न संशयः ॥

बृहज्जाबालोपनिषदि –

विभूतिर्भसितं भस्म क्षारं रक्षेति चात्मनः ।
भवन्ति पञ्च नामानि पञ्चभिर्नामभिर्भृशम् ॥

ऐश्वर्यकारणाद्भूतिः भस्म सर्वाघभक्षणात् ।
भासनाद्भसितं प्रोक्तं क्षारणात्क्षारमापदाम ॥

भूतप्रेतपिशाचब्रह्मराक्षसापस्मारसंसारभवभीतिभ्योऽभिरक्षणाद्रक्षेति

कालोत्तरे

तस्मादेतच्छिवस्नानमाग्नेयं यस्समाचरेत् ।
भवपाशैश्चनिर्मुक्तश्शिवलोके महीयते ॥

ज्वररक्षःपिशाचाश्चाप्यसुरायातुधानकाः ।
कुमारग्रहभूताश्च कूष्माण्डा ढाकिनीगणाः ॥

ब्रह्मराक्षसमुख्याश्च पूतनाङ्गुष्ठगुल्मकाः ।
भगन्धराणि सर्वाणि ह्यशीतिर्वातरोगकाः ॥

चतुष्षष्ठिः पित्तरोगाश्श्लेष्मसप्तत्रिपञ्चकाः ।
व्याघ्रसर्पभयंचैव ह्यन्ये दुष्टग्रहाऽपि ॥
भस्मस्नानेन नश्यन्ति सिंहेनैव गजा यथा ॥

अथैकविंशतिकुलोद्धारकत्वम् —

अथ त्र्यंबकमिति सर्वांगं संमृजेत् । पूतो भवति । दशपूर्वान्दश-परानात्मानं चैकविंशतिपंक्ति च पुनातीति बोधायन सूत्रे ।

शिवधर्मे :—

यस्स्नानमाचरेन्नित्यं मा (आग्ने) यं संयतेन्द्रियः ।
कुलैकविंशतिमुत्तार्य (द्धृत्य) स गच्छेत् परमांगतिम् ॥

अथ कर्माङ्गत्वं संहितान्तरे —

तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।
येन विप्रेण शिरसि त्रिपुण्ड्रं भस्मना धृतम् ॥

कृतं स्यादकृतं तेन श्रुतमप्यश्रुतं भवेत् ।
अधीतमनधीतश्च त्रिपुण्ड्रं यो न धारयेत् ॥

वृथा वेदा वृथा यज्ञा वृथा दानं वृथा तपः ।
वृथा व्रतोपवासौ तु त्रिपुण्ड्रं यो न धारयेत् ॥

सत्यं शौचं तपो यज्ञः तीर्थं देवादिपूजनम् ।
सर्वमेतद्व्रवेद्व्यर्थं यत्रिपुण्ड्रं न धारयेत् ॥

पराशरोपपुराणे :—

न तद्ध्यानं न तद्दानं न तद्ज्ञानं न तत्तपः ।
विना तिर्यक्त्रिपुण्ड्रांकं विप्रेण यदनुष्ठितम् ॥

शिवधर्मे :–

भस्मस्नानात्परं स्नानं पवित्रं नैव विद्यते ।
उक्त्वैवं मुनिदेवेभ्यस्स्नातो देवश्शिवस्स्वयम् ॥

तदाप्रभृति ब्रह्माद्या मुनयश्च शिवार्थिनः ।
सर्वकर्मसु यत्नेन भस्मस्नानं प्रचक्रिरे ॥

भारद्वाजस्मृतौ :–

प्राङ्मुखश्चरणौ हस्तौ प्रक्षाल्याचम्य पूर्ववत् ।
प्राणानायम्य सङ्कल्प्य भस्मस्नानं समाचरेत् ॥

आदाय भसितं श्वेतमग्निहोत्रसमुद्भवम् ।
ईशानेन तु मन्त्रेण स्वमूर्धनि विनिक्षिपेत् ॥

तत आदाय तद्भस्म मुखे तत्पुरुषेण तु ।
अघोराख्येन हृदये गुह्ये वामाह्वयेन च ॥

सद्योजाताभिधानेन भस्मपादद्वये क्षिपेत् ।
सर्वांगं प्रणवेनैव मन्त्रेणोद्धूलयेत्ततः ॥

एतदाग्नेयकं (भस्म) समुदितं परमर्षिभिः ।
सर्वकर्मसमृद्ध्यर्थं कुर्यादादाविदं बुधः ।
ततः प्रक्षाल्य हस्तादीनुपस्पृश्य यथाविधि ॥

तिर्यक्त्रिपुण्ड्रं विधिना ललाटे हृदये गले ।
पञ्चभिर्ब्रह्मभिर्वापि कृतेन भसितेन च ॥

कृत्वाग्निहोत्रजेनैव भस्मना तु सकृन्नरः ।
धृतमेतत्त्रिपुण्ड्रं स्यात्सर्वकर्मसु पावनं ॥ इति ॥

अतोऽग्निहोत्रजेनैवभस्मना तु त्रिपुण्ड्रकम् ।
नित्यं द्विजोऽप्रमादेन कुर्यात्कर्मविवृद्धये ॥
अन्यथा सर्वकर्माणि न भवन्ति कदाचन ॥ इति च ॥

## नारदीयस्मृतौ :—

सत्यं शौचं जपोहोमस्तीर्थं देवादिपूजनम् ।
तस्य व्यर्थमिदं सर्वं यस्त्रिपुण्ड्रं न धारयेत् ॥ इति ॥

श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने ।
धृतः त्रिपुण्ड्रः पूतात्मा मृत्युञ्जयति मानवः ॥
त्रिपुण्ड्रं यद्यधृत्वा तु कुर्याद्यत्कर्म तद्वृथा ॥ इति च ॥

## पराशरोपपुराणे :—

वेदस्याध्ययने शूद्रो नाधिकारी यथा भवेत् ।
त्रिपुण्ड्रेण विना विप्रो नाधिकारी शिवार्चने ॥

विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षधारणम् ।
पूजितोऽपि महादेवः प्रसादन्नकरिष्यति ॥

## बृहन्नारदीये :—

तुलसीमञ्जरीभिस्तु यः कुर्यादर्चनं हरेः ।
धृतरुद्राक्षभस्माद्यो ब्रह्मतां यात्यसौ ध्रुवम् ॥

अथ शिवविष्ण्वादितृप्तिकरत्वं पराशरोपपुराणे —

भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ।
पार्वत्याश्च महालक्ष्म्याः भारत्यास्तृप्तिकारणम् ॥

अथाष्टैश्वर्यप्रदत्वम् - ब्रह्मविष्णुमुखैरित्युपक्रम्य भस्मात्यन्तंशिवप्रियमित्युक्त्वा –

अष्टैश्वर्याणि सिद्ध्यन्ति धारणादस्य मन्त्रतः ।
अष्टभिसिद्धयश्शंभौ भक्तिः परमकारणे ॥
(अष्टैश्वर्यप्रदा शंभौ भक्तिः परमकारणम्)
सर्ववश्यकरञ्चैतत् सर्वसौभाग्यदं परम् ॥
इति शङ्करसंहितायाम् ॥

अथत्रिमूर्तिदेवर्ष्यादिसर्वधृतत्वं सूत संहितायां –

शिवेन विष्णुना चैव ब्रह्मणा वज्रिणा तथा ।
देवताभिर्धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना ॥

ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैरपि च संकरैः ।
अपभ्रंशैर्धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना ॥

पराशरोपपुराणे :–

यथा विशिष्टे मानुष्ये ब्राह्मण्यं पशुविग्रहे ।
यज्ञदानाद्यनुष्ठानं दुर्लभं खलु देहिनाम् ॥

तथा श्रौतेषु धर्मेषु त्रिपुण्ड्रं भस्मकुण्ठनम् ॥
कुरु लिंगार्चनं वापि दुर्लभं हि शरीरिणाम् ॥

त्रिपुण्ड्रधारणं कुर्याद्भस्मना चावकुण्ठनम् ।
सुदुर्लभमिति ज्ञात्वा खलु सर्वेश्वरोऽकरोत् ॥
निर्दुःखो निर्मलः साक्षान्नित्यानन्दो निरञ्जनः ॥

किमर्थमकरोदृत्र हि शिवस्साक्षान्निरामयः ।
अनियोज्यस्सदा कर्ता सदा भोक्ता महेश्वरः ॥

किमर्थमकरोदृत्र हि साधकस्योदितं मुने ।
तस्मात्सुदुर्लभं नृणां इति ज्ञात्वा महेश्वरः ॥

त्रिपुण्ड्रधारणं भस्मकुण्ठश्चाकरोत्सदा ।
अनिष्पन्नस्य कर्तव्यं त्रिपुण्ड्रादेस्तु धारणम् ॥

विशेषेणस्वलाभाय नान्यलाभाय सत्तमाः ।
पराचारार्थमास्तिक्यनिष्पन्नेनापि कर्तव्यम् ॥

यथासर्वेश्वरेणतु – शंकरसंहितायाम् –

ब्रह्मविष्णुमुखैर्देवैः ऋषिभिश्च तपोधनैः ।
ब्राह्मणैर्क्षत्रियैर्वैश्यैश्शूद्रैरन्यैश्चसंकरैः ।
त्रिभिश्च धार्यमेतद्धै भस्मात्यन्तं शिवप्रियम् ॥

कौर्मे —

एवमुक्त्वा ददौ ज्ञानं उपमन्युमहामुनिः ।
व्रतं पाशुपतं योगं कृष्णायाऽक्लिष्टकर्मणे ॥

स तेन मुनिवर्येण व्याहृतो मधुसूदनः ।
तथैव तपसा देवो रुद्रमाराधयत्प्रभुम् ॥

भस्मोद्धूलितसर्वाङ्गो जटावल्कलसंयुतः ।
अत्र पूर्वं हृषीकेशो विश्वात्मा देवकीसुतः ॥

उवास वत्सरं कृष्णः सदापाशुपतं व्रतम् ।
भस्मोद्धूलितसर्वाङ्गो रुद्राध्ययनतत्परः ॥
आराधयद्धरिःशंभुं कृत्वापाशुपतं व्रतम् ॥ इति च ॥

**पाद्मे —**

अथ रामगिरौ रामः पुण्यगोदावरीतटे ।
शिवलिंगं प्रतिष्ठाप्य कृत्वा दीक्षां यथाविधि ॥

भूतिभूषितसर्वाङ्गो रुद्राक्षाभरणैर्युतः ।
अभिषिच्य जलैः पुण्यैर्गौतमीसिन्धुसंभवैः ॥

अर्चयित्वा वन्यपुष्पैः तद्वद्वन्यफलैरपि ।
भस्मच्छन्नो भस्मशायी व्याघ्रचर्मासने स्थितः ॥

**सौरसंहितायाम् —**

रुद्रलोकंप्रस्तुत्य–तत्रैव–देवदेवेशं शङ्करं शशिशेखरम् ।
प्रणवाद्यभिमानिन्यो देवताः पर्युपासन् ॥

प्रणवस्सर्वमन्त्राणामाधारः परमात्मनः ।
वाचको जटिलश्शुद्धो भस्मोद्धूलितविग्रहः ॥

केयूरकटकोपेतः पुण्ड्रत्रयविराजितः ।
व्याहृती परमादेवी विशेषेण विमुक्तिदा ॥

त्रिपुण्ड्रावलिभिर्दीप्ता भस्मनैवावकुण्ठिता ।
सावित्री च महाभागा कुण्डलद्वयशोभिता ॥

प्रसन्नवदना दिव्या जटाजूटधरा शुभा ।
भस्मदिग्धशरीरा च पुण्ड्रत्रयविराजिता ॥

अन्याश्च वैदिकामन्त्रास्सकला बहुकामदाः ।
भस्मसञ्छिन्नसर्वाङ्गास्त्रिपुण्ड्राङ्कितमस्तकाः ॥
रुद्राक्षमालाभरणा जटाजूठधरा मुदा ॥

सूतसंहितायाम् –

एतस्मिन्नन्तरे श्रीमान्महाकारुणिकोत्तमः ।
कृष्णाजिनी सोत्तरीयो पाषण्डेनविराजितः ॥

भस्मोद्धूलितसर्वाङ्गश्शुद्धस्तिर्यक्त्रिपुण्ड्रधृक्
रुद्राक्षमालाभरणो जपन् पञ्चाक्षरं मुदा ॥
शिष्यैस्तादृग्विधैर्युक्तो महात्मा स्वयमागतः ॥ इति ॥

सत्रावसाने सन्नद्धा इति प्रस्तुत्य – ऋषिभिः –
इति वर्णनावसरे –

ऋजवो मृदवस्स्वस्थास्सर्वद्वन्द्वविवर्जिताः ।
रुद्राक्षमालाभरणास्सितभस्मावकुण्ठिताः ॥

त्रिपुण्ड्रावलिभिर्दीप्ता जटावल्कलसंयुताः ।
लिङ्गार्चनपरा नित्यं शिवस्यामिततेजसः ॥ इति

विशिष्टधर्मग्रहणार्थिनः कालर्षैयान्ऋषीन्प्रस्तुत्य —

गत्वाभिमतः पार्श्वे त्रिकालज्ञानसंयुताः ।
भस्मोद्धूलितसर्वाङ्गास्त्रिपुण्ड्राङ्कितमस्तकाः ॥
रुद्राक्षमालाभरणा जटावल्कलसंयुताः ॥ इति ॥

पुरा श्वेतादिऋष्यन्ता मुनयो मुनिसत्तमाः ।
संख्या च शतमेतेषां सह द्वादशसंख्यया ॥

त एते भस्मदिव्याङ्गास्त्रिपुण्ड्राङ्कितमस्तकाः ।
रुद्राक्षमालाभरणा रुद्राराधनतत्पराः ॥ इति च ॥
अथभस्मोत्पादनबोधक प्रमाणानि लिख्यन्ते ॥

## बृहज्जाबालोपनिषदि —

ब्रह्मन् जाबालाभिधां मुक्तिं शक्तिं ममोपदेशं कुरुष्वेति । ओं तथेति । सद्योजातात्पृथ्वी तस्या निवृत्तिः कपिलवर्णा नन्दा तस्या गोमये विभूतिर्जाता । वामदेवादुदकं प्रतिष्ठा तस्याः कृष्णवर्णा भद्रा । तस्या गोमये भसितं जातम् ॥ तस्याघोरात् वह्निस्तस्माद्विद्या तस्या रक्तवर्णा सुरभिः तस्या-गोमये भस्मजातम् । तत्पुरुषाद्वायुस्तस्माच्छान्तिस्तस्या श्वेतवर्णा सुशीला तस्या गोमये क्षारं जातम् । ईशानादाकाशः तस्माच्छान्त्यतीतास्तस्याश्चित्रवर्णा सुमनास्तस्या गोमये रक्षा जाता ।

विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनः ।
भवन्ति पञ्च नामानि पञ्चभिर्नामभिर्भृशम् ॥

तत्रैव तृतीय ब्राह्मणे —

अथ भूसुरैः कालाग्निरुद्रं विभूतियोगं ब्रूहीति हो वाच । विकटाङ्गामुन्मत्तां महाशनां अतिखरमलिनां शिवादिचिह्नाङ्कितां पुनर्धेनुं कृशाङ्गां वक्रां अंगहीनां वत्सहीनां श्रान्तां दुग्धदोहिनीं निरिन्द्रियां जगन्धत्रिणां केशच्छेलास्थिभक्षिणीं वन्धिनीं नवप्रसूतां रोगान्वितां विहाय प्रशस्तं गोमयमाहरेत् ।

तत्र तेश्लोका :—

विद्याशक्तिस्समस्तानां शक्तिरित्यभिधीयते ।
गुणत्रयाश्रया विद्या सा विद्या च तदाश्रया ॥

गुणत्रयमिदं धेनुर्विद्याऽभूत्गोमये शुभम् ।
मूत्रंचोपनिषत्प्रोक्तं कुर्याद्भस्म ततः परम् ॥

वत्सास्तु स्मृतयश्चास्या तत्संभूतं (च) गोमयम् ।
आगाव इति मन्त्रेण धेनुन्तत्राभिमन्त्रयेत् ॥

गावो भगो गाव इति प्राशयेत्तु तृणञ्जलम् ।
उपोष्य च चतुर्दश्यां शुक्ले कृष्णेऽथवा व्रती ॥

परेद्युः प्रातरुत्थाय शुचिर्भूत्वा समाहितः ।
कृतस्नानो धौतवस्त्रः पयोर्थञ्च शृजेच्च गाम् ॥

उत्थाप्य गां प्रयत्नेन गायत्र्या मूत्रमाहरेत् ।
सौवर्णे राजते ताम्रे धारयेन्मृण्मये घटे ॥

पौष्करेऽथ पलाशे वा पात्रे गोशृङ्ग एव वा ।
आददीत हि गोमूत्रं गन्धद्वारेति गोमयम् ॥

आभूमिपादं गृह्णीयात्पात्रे पूर्वोदिते ग्रही ।
गोमयं शोधयेद्विद्वान्श्रीर्मे भजतु मन्त्रतः ॥

अलक्ष्मीरिति मन्त्रेण गोमयस्थान्यवर्जनम् ।
सन्त्वासञ्चामि मन्त्रेण गोमूत्रं गोमये क्षिपेत् ॥

पञ्चानाद्वेति मन्त्रेण पिण्डानाञ्च चतुर्दश ।
कुर्यात्संशोच्य किरणैस्सौरकैराहरेत्ततः ॥

निदद्ध्यादथ पूर्वोक्तपात्रे गोमयपिण्डकान् ।
स्वगृह्योक्तविधानेन प्रतिष्ठाप्याग्निमीयजेत् ॥

पिण्डांश्च निक्षिपेत्तत्र प्राद्यन्ति प्रणवेन च ।
षडक्षरस्य सूत्रस्य व्यावृत्तस्य तथाक्षरैः ॥

स्वाहान्तैर्जुहुयात्तत्र वर्णदेवाय पिण्डकान् ।
आघारावाज्यभागौ च प्रक्षिपेद्व्याहृतीस्सुधीः ॥

ततो निधनपतये त्रयोविंशज्जुहोति च ।
होतव्याः पञ्चब्रह्माणि नमो हिरण्यबाहवे ॥ इति ।

सर्वाहुतीर्हुत्वा.... चतुर्थ्यन्तैश्च मन्त्रकैः ।
"ऋतँ सत्यं कद्रुद्राय यस्यवैकंकतीति च" ॥

एतैश्च जुहुयाद्विद्वान् अनाज्ञातत्रयन्तथा ।
व्याहृतीरथहुत्वा च ततस्स्विष्टकृतं हुनेत् ॥

इत्थं शेषञ्चनिर्वृत्य पूर्णपात्रोदकं तथा ।
पूर्णमसीति यजुषा जलेनान्येन बृह्मयेत् ॥

ब्राह्मणेष्ववमृतमिति तज्जलं शिरसि क्षिपेत् ।
प्राच्यामितिदिशंलिंगैर्दिक्षु तोऽयं निनिक्षिपेत् ॥

ब्रह्मणे दक्षिणां दत्वा शान्त्यै पुलकमाहरेत् ।
आहरिष्यामि देवानां सर्वेषां कर्मगुप्तये ॥
जातवेदसमेनं त्वां पुलकैश्चादयाम्यहम् ॥

मन्त्रेणानेन तं वह्निं पुलकैश्चादयेत्ततः ।
आदिनज्वलनस्थित्यैश्चादनं पुलकं स्मृतम् ॥

ब्राह्मणान्भोजयेद्भक्तया स्वयं भुञ्जीत वाग्यतः ।
भस्मादित्यमभीष्टस्तु अधिकं गोमयं हरेत् ॥

दिनत्रि(त्र)येण वा यदि वा एकस्मिन्दिवसे ऽथवा ।
तृतीये वा चतुर्थे वा प्रातस्स्नात्वा सिताम्बरः ॥

शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः ।
शुक्लदन्तो भस्मदिग्धां मन्त्रेणानेन मन्त्रवित् ॥

ओंतद्ब्रह्मेति चोच्चार्य पौलकं भस्म संत्यजेत् ।
तत्र. वाहनमुख्यांश्च उपचारांश्च षोडश ॥

कर्तव्या व्याहृता (हृतय) स्त्वेवं ततोग्निमुपसंहरेत् ।
अग्नेर्भस्मेति मन्त्रेण गृह्णीयाद्भस्म चोत्तमम् ॥

अग्निरसीति मन्त्रेण प्रमृज्य च ततःपरम् ।
संयोज्य गन्धसलिलैः कपिलामूत्रकेण वां ॥

चन्द्रकुंकुमकाश्मीरमुशीरं चन्दनं तथा ।
अगरुत्रितयञ्चैव पूर्णयित्वा तु सूक्ष्मतः ॥

प्रणवेनाहरेद्विद्वान्बृहतो पटकानथ ।
अणोरणीयानिति मन्त्रेण च विचक्षणः ॥

**बोधायनसूत्रे :–**

अथातो विभूति संपादन धारणविधिं व्याख्यास्यामः । शुचिर्भूत्वा - विकटां गामुन्मत्तां अशिवां हीनातिरिक्तां गां वन्ध्यामस्थिचेलां (अ) शुचिभक्षिणीं रोगिणीं विहाय सुलक्षणाया गोमयमादाय पिण्डंकृत्वा संशोध्य परिच्छाद्य गृह्याग्नौ वैताने वा वचने उपोषयेत् । बिल्वपात्रे मृण्मये वा स्थापयेत् । बोधायनेति तत्गृह्यं वामेनत्वभिमन्त्रयेत् । अघोरेण दहेत् । पिण्डं ग्राह्यं तत्पुरुषेण तु सुप्रभेदे —

नमस्कृत्वा महादेवं (नीलकण्ठेति) चाब्रवीत् ।
भस्मस्नानं महादेव तत्संयग्वदमे प्रभो ॥

ईश्वरः –

अथाथस्संप्रवक्ष्यामि भस्मस्नानं ... ... ... ।
ल ... .... (अघहर) मारोग्यं च श्रीःपुष्टिर्वर्धते यथा ॥

रक्षार्थं मङ्गलार्थं च सर्वसंपत्समृद्धये ।
भस्मदिग्धमनुष्याणां ज्वरमा .... .... कम् ॥

पौष्टिकं भस्म ... ... ... कामदश्च त्रिधा भवेत् ।
गोमयं यो( नि) संबद्धं यद्ध(त)स्तेनैवगृह्यते ॥
ब्रह्ममन्त्रैश्च संदश्चन्तच्छान्तिकमिहोच्यते ॥

.... .... गोयोनिनिस्सृतं गोमयं च तत् ।
अन्तरिक्षे गृहीत्वा तत्षडङ्गेन दहेत्ततः ॥

पौष्टिकन्तत्समाख्यातं कामदं तु ततः श्रृणु ।
सुशुभे .... .... नं .... .... गोमयं तु यत् ॥

प्रासादेन दहेदेतत् एतत्कामदमुच्यते ।
प्रातरुत्थाय देवेशी मौनव्रतधरश्शचिः ॥

गवां गो ... ... ... कुलम् ।
गवां वर्णानुरूपाणां गृह्णीयाद्गोमयं शुभम् ॥

ब्राह्मणस्यतु गौ श्वेता रक्ता गौ क्षत्रियस्य च ।
पीतव ... ... ... स्यतूच्यते ॥

पूर्णिमास्या(या)ममायां वा अष्टम्यां वा विशुद्धधीः ।
प्रासादेन तु मन्त्रेण गृहीत्वा गोमयं शुभम् ॥

... ... ... कृत्वा तु गोमयम् ।
रविरश्मिषु सन्तप्तं शुचौ देशे मनोहरे ॥

तुषेण वा ... ... बृसैर्वापि प्रासादे ।
अग्निं वा तुषाग्निं वाऽपिकारयेत् ... ॥

अग्निश्च विन्यसेत्तत्र शिवबीजेन मन्त्रतः ।
संगृहेदथ तच्चापि कुर्याद्भस्म विचक्षणः ॥

नवपात्रं समादाय प्रासादेन तु विक्षेपेत् ।
केतकीं पाटलीं तद्वदुशीरश्चन्दनन्तथा ॥
निक्षिपेत्तस्य मध्येतु सद्योमन्त्रेण शुद्धधीः ॥

**पाद्मे श्रीराम :—**

पीतांबुधे प्रसन्नस्त्वं यदि मे किमु दुष्करम् ।
अतस्त्वं विरजादीक्षां ब्रूहि मे मुनिसत्तम ॥

**अगस्त्यः —**

शुक्लपक्षे चतुर्दश्यामष्टम्यां वा विशेषतः ।
एकादश्यां सोमवारे आर्द्रायां वा समारभेत् ॥
यं वा तमाहुर्यं रुद्रं शाश्वतं परमेश्वरम् ॥

परात्परतरञ्चाहुः परात्परतरं शिवम् ।
ब्रह्मणोजनकं विष्णोर्वह्नेर्वायोस्सदाशिवम् ॥

ध्यात्वाग्निनावसभ्याग्निं विशोध्य च पृथक् पृथक ।
पञ्चभूतानि संयम्य मात्रा गुणविधिक्रमात् ॥

मात्राः पञ्चचतस्रश्च त्रिमात्रा द्विस्ततःपरम् ।
एकमात्रममात्रं हि द्वादशान्ते व्यवस्थितम् ॥

स्थित्वा स्थाप्यामृतो भूत्वा व्रतं पाशुपतं चरेत् ।
इदं व्रतं पाशुपतं करिष्यामि समाहितः ॥

प्रातरेवन्तुसंकल्प्य निधायाग्निं स्वशाखया ।
उपोषितश्शुचिस्स्नातः शुक्लांबरधरस्स्वयम् ॥
शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः ॥

जुहुयाद्विरजामन्त्रैः प्राणापानादिभिस्ततः ।
अनुवाकान्तमेकाग्रं समिदाज्यचरून् पृथक् ॥

आत्मन्यग्निं समारोप्य याते अग्न इति मन्त्रतः ।
भस्मादायाग्निरित्याद्यैर्विमृज्यांगानि संस्पृशेत् ॥

अयं होमप्रकारः उत्तरत्र प्रदर्शयिष्यते —

एवं वायव्य संहितायामपि होमादिपुरस्सरं पाशुपतव्रतानुष्ठान प्रकारः बहुधा प्रपञ्चितः । स चापि उत्तरत्र निरूपयिष्यते । शैवे कपिलायाः शकृच्छ्स्तं गृहीत्वा गगनेऽपतत् ।

नक्लिन्नन्नाति कालीनं न दुर्गन्धं नचोषितम् ।
उपर्यधः परित्यज्य गृह्णीयात् पतितं यदि ॥
पिण्डीकृत्य शिवाग्न्यादौ निक्षिपेन्मूलमन्त्रतः ॥

अपक्वमतिपक्वञ्च सन्त्यज्य भसितं सितं ।
आदाय वाससा लांढ्य भस्माधारे विनिक्षिपेत् ॥

सुकृते सुदृढे शुद्धे क्षालिते प्रोक्षिते शुभे ।
विन्यस्य मन्त्री मन्त्रेण पात्रे भस्म विनिक्षिपेत् ॥

तैजसं दारवं वापि मृण्मयञ्चैलमेव वा ।
अन्यद्वा शोभनं शुद्धं भस्माधारं प्रकल्पयेत् ॥

क्षेमदे शुभदे शुद्धे धनवद्भस्म निक्षिपेत् ।
प्रस्थितो भस्म गृह्णीयात्स्वयंचानुचरोऽपि वा ॥

न चायुक्तकरेदद्यान्नचाशुद्धिस्थले क्षिपेत् ।
न संप्रशेत चिचाङ्गैर्नोपेक्ष्येत न लंघयेत् ॥
तस्माद्भसितमादाय विनियुञ्जीत मन्त्रतः ॥

अथ भस्मव्यवस्था - बृहज्जाबालोपनिषदि -

त्रैवर्णिकानां अग्निहोत्रजम्-गृहस्थानां-विरजानलजं - विवाहाग्निज-मौपासनाग्निजं वा । ब्रह्मचारिणां समिदग्निजं शूद्राणां श्रोत्रियागारपचनाग्निजं-अन्येषां-दावानलसमुद्भवम् - यतीनां सर्वत्रस्थितं अतिवर्णाश्रमिणां श्मशाना-ग्निजं - सर्वेषां देवालयेस्थितमिति । शिवयोगिनां शिवाग्निजा भूतिः शिवालये स्थितं मतलिकामन्त्रसंस्कारदग्धमेव वा ॥

वासिष्ठलैंगे पञ्चमाध्याये :–

त्रैवर्णिकानां सर्वेषां अग्निहोत्रसमुद्भवम् ।
विरजानलजं चैव धार्यं भस्म महामुने ॥

औपासनसमुत्पन्नं गृहस्थानां विशिष्यते ।
समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणा ॥

शूद्राणां श्रोत्रियागारे पचनाग्नि समुद्भवम् ।
अन्येषामपि सर्वेषां धार्यन्दावानलोद्भवम् ॥

सूतसंहितायाम् :–

समिदग्निसमुत्तेन विरजानलजेन वा ।
अग्निहोत्रसमुत्तेन भस्मना सजलेन तु ॥
अग्निरित्यादि (भि) मंन्त्रैः षड्भिर्वा सप्तभिः क्रमात् ॥

तत्रैव :–

स्वल्पं भस्म द्विजश्रेष्ठ बहुधा परिकीर्तितम् ।
श्रौतमेकं तथा स्मार्तं अपरं पण्डितोत्तमाः ॥

श्रौतं भस्म द्विजा मुख्यं स्मार्तं गौणं प्रकीर्तितम् ।
अन्यच्चापिद्विजा भस्म केवलं लौकिकं परम् ॥

श्रौतं भस्म तदा स्मार्तं द्विजानमेव कीर्तितम् ।
अन्येषामपि सर्वेषां अपरं भस्म लौकिकम् ॥

तत्रैव शिवमाहात्म्यखण्डे :—

पुनस्साक्षाच्छिवज्ञानसिद्ध्यर्थं मुनिपुङ्गवाः ।
अग्निहोत्रसमुत्पन्नं भस्मादायादरेण तु ॥

कालाग्निरुद्रोपनिषदि :—

किंद्रव्यमित्यारभ्य द्रव्यन्तदाग्नेयं भस्मेति ॥

भारद्वाजस्मृतौ :–

"प्राङ्मुखश्चरणौहस्तौ प्रक्षाल्याचम्य इति" प्रस्तुत्य –

आदाय भसितं श्वेतं अग्निहोत्रसमुद्भवम् ।
शूद्रहस्तस्थितं भस्म नैव धार्यं द्विजातिभिः ॥
शूद्रैरन्त्यजहस्तस्थं न धार्यं भस्म जातुचित् ॥

अतोऽग्निहोत्रजेनैव भस्मना तु त्रिपुण्ड्रकम् ।
नित्यं द्विजोऽप्रमादेन कुर्यात्कर्मविवृद्धये ॥

पुरुषार्थप्रबोधकारास्तु :—

विभूति धारणविधिस्तन्त्रोक्तोऽत्र मयेरितः ।
तन्त्रोक्ताचारसांकर्यपरिहाराय नान्यथा ॥

शैवैः संपादितं भस्म वैदिकैश्शिवसन्निधौ ।
भक्त्या परमया ग्राह्यं प्रार्थयित्वापि पूजकान् ॥

तन्त्रोक्तवर्त्मना सिद्धं भस्म प्रार्थितपूजकैः ।

यत्रकुत्रापि दत्तञ्चेत्तच्चग्राह्यं हि वैदिकैः ॥

शैवैरप्रार्थितैरेव महादेवस्य सन्निधौ ।

लौकिकं भस्म दत्तञ्चेत्तच्च ग्राह्यं हि वैदिकैः ॥

अप्रार्थितैस्तान्त्रिकैस्तु यत्र कुत्रापि पूजकैः ।

लौकिकं भस्म दत्तञ्चेत्तद्ग्राह्यं नैव वैदिकैः ॥

शूद्रैः (क्वाप्य) लिङ्गैर्वापि पाषण्डैरपरैश्च वा ।

दत्तञ्चेद्भस्म वेदैकनिष्ठैस्तद्ग्राह्यमेव न ॥

वणिग्वा तापसो वापि शूद्रो वा यदि भूतिदः ।

सा भूतिस्सर्वथा ग्राह्या नोचेद्द्रोही ममैव सः ॥

इत्यस्य शिववाक्यस्य कागतिः कथ्यतेतिचेत् ।

चण्डालगेहे विप्राणां गृहे वा परमार्थवित् ॥

भक्ष्यभोज्यादिवैषम्यन्नकिञ्चिदपि पश्यति ।

इत्यस्य या गतिस्सैव गतिरस्येति निश्चिनु ॥

यावन्तः पतिता भूमौ भस्मनः परमाणवः ।

तावद्वर्षसहस्राणि रौरवं नरकं व्रजेत् ॥

इत्येवं भस्मपतने बहुदोषस्य कीर्त्तनात् ।

भूत्वात्यन्तं सावधानो धारयेद्भस्म बुद्धिमान् ॥

## बृहज्जाबालोपनिषदुपब्रह्मकपाद्मोक्तं -
## विरजाहोमप्रकारः प्रदश्यते :-

साधकश्शुक्लचतुर्दश्यां कृष्णचतुर्दश्यां वा संकल्पपुरस्सरं - शुचिर्भूत्वोपोष्य तस्मिन्नेवदिने बृहज्जाबलोक्ता अप्रशस्ताः गाः परित्यज्य प्रशस्तां गां आगाव - इति मन्त्रेणाभिमन्त्र्य गावोभग इति मन्त्रेण तृणं जलं च प्राशयेत् । एवं चतुर्दश्यां व्रती सन् परेद्युः प्रातरुत्थाय शुचिर्भूत्वा समाहित(मना)स्सन् कृतस्नातो धौतवस्त्रो विभूतिधारणपुरस्सरं सन्ध्यां जपः प्रातरौपासनादिकं कृत्वा पयोर्थं गां व्रजेत् । गत्वा वत्ससंयोगकाले सौवर्णे राजते ताम्रे मृण्मये गोशृङ्गमये पालाशमये वा पात्रे पुष्करपर्णे वा - गायत्र्या गोमूत्रमाहरेत् । पूर्वोक्त एव पात्रे गंधद्वारामिति मन्त्रेण गोमयं खसंस्थमाहरेत् । शुद्धभूमौ पतितमपि अधऊर्ध्वं परित्यज्य मध्ये विद्यमानमाहरेत् । श्रीर्मेभजत्विति मन्त्रेण गोमयं शोधयेत् । अलक्ष्मीर्मे नश्यत्विति मन्त्रेण गोमयस्थसिकताबीजधान्यादिकं वर्जयेत् । सत्वासिञ्चामियजुषा प्रजामायुर्धनञ्चेतिमन्त्रेण गोमूत्रं गोमये क्षिपेत् । अनन्तरं गोमयं सम्यगुपमृज्य "पञ्चानान्त्वापाताना" मिति चतुर्दश मन्त्रैश्चतुर्दश पिण्डान्कुर्यात् । अधिकविभूति संपादने चेत् कृष्ण(त्स्न)मेव पिण्डान्तराणिकुर्यात् । शुद्धपात्रे निधाय स्वौ(सौ)रकिरणैस्संशोष-यित्वा पूर्वोक्तपात्रे निदद्ध्यात् । अनन्तरं स्वगृह्योक्तविधानेन अग्निं प्रतिष्ठाप्य प्रज्वाल्य परिस्तरणादि ब्रह्मवरणपूर्वकमिध्मप्रक्षेपणान्तं कृत्वा अनन्तरं पिण्डान्जुहुयात् ॥

ओं स्वाहा-परमात्मन इदं । ओंस्वाहा । नं स्वाहा इन्द्राय इदं । मं स्वाहा रुद्राय इदं । शिं स्वाहा विष्णवे इदं । वां स्वाहा ब्रह्मण इदं । यं स्वाहा स्कन्दाय इदं । पुनरपि यं स्वाहा वां स्वाहा हिं स्वाहा नं स्वाहा मं स्वाहा । ओं स्वाहा अधिकविभूत्यपेक्षायां पिण्डान्तराणि तूष्णीमेव अग्नौ प्रक्षिपेत् । आघारवाज्य-भागमुखान्तं कृत्वा व्याहृतीभिर्जुहुयात् । निधनपतये स्वाहा । निधनपत-दान्तिकाय ऊर्ध्वाय-ऊर्ध्वलिंगाय-हिरण्याय - हिरण्यलिंगाय - सुवर्णाय-सुवर्ण-लिंगाय-दिव्याय-दिव्यलिंगाय-भवाय-भवलिंगाय- शर्वाय-शर्वलिंगाय- शिवाय-शिवलिंगाय - ज्वालाय ज्वालालिंगाय - आत्माय - आत्मलिंगाय - परमाय - परमलिंगाय-स्वाहा ॥ एतत् सोमस्य सूर्यस्य सर्वलिंगं स्थापयति । पाणिमन्त्र-पवित्रं स्वाहा । सोमादिभ्य इदं । सद्योजातं प्रपद्यामि सद्योजाताय स्वाहा । सद्योजाताय इदं - भवेभवेनादिभवेभवस्व मां भवोद्भवाय स्वाहा । भवोद्भवाय इदं - वामदेवाय स्वाहा । ज्येष्ठाय-श्रेष्ठाय - रुद्राय - कालाय - कलविकरणाय - बलविकरणाय - बलाय - बलप्रमथनाय - सर्वभूत-दमनाय - मनोन्मनाय स्वाहा - अघोरेभ्यस्स्वाहा - अथ घोरेभ्यस्स्वाहा । घोरघोरतरेभ्यस्स्वाहा । सर्वाभ्यस्सर्वेभ्यस्स्वाहा - नमस्तेऽस्तु रुद्ररूपेभ्य-स्स्वाहा । तत्पुरुषाय+चोदयात् स्वाहा । तत्पुरुषेभ्य इदम् । ईशानस्सर्वविद्या +सदाशिवोँ स्वाहा । ईशानादिभ्य इदं । अथवा सद्योजातादि पञ्चब्रह्ममन्त्रैः पञ्चाहुतीर्जुहुयात् । नमो हिरण्यबाहवे स्वाहा । हिरण्यवर्णायस्वाहा । हिरण्यायस्वाहा । हिरण्यरूपाय स्वाहा । हिरण्यपतये स्वाहा । अंबिकापतये-स्वाहा । उमापतये-पशुपतये-स्वाहा । ऋतँ सत्यं + विश्वस्वरूपायवै नम स्वाहा । ऋतादिभ्य इदं - सर्वोवै + नमोनम स्वाहा । सर्वपुरुषात्मक रुद्र रूपायइदं । विश्वं भूतं भुवनं + नमोऽस्तु स्वाहा । विश्वाद्यात्मक

रुद्राय इदं - कदुरुद्राय + नमोस्तु स्वाहा । प्रचेताद्यात्मक रुद्राय इदं । यस्य वै कंकति + अथोप्रतिष्ठित्यैत्रै(प्रै)व जायते स्वाहा ।

अस्मिन् कर्मणि हुताहुतसाद्गुण्याय इदं । अनाज्ञातत्रयं व्याहृतीश्च हुत्वा ततस्स्विष्टकृतं हुनेत् । स्विष्टकृत् प्रभृति परिधिप्रहरणं विना अनूयाजि समित्प्रक्षेपणान्तं - कृत्वा-पूर्णपात्रं पुरतः स्थापयित्वा - पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः अक्षितमसि मामेक्षेष्ठाः - इति मन्त्रेण - शुद्धजलान्तरं प्रक्षिप्य प्राच्यां दिशि देवा इत्यादिना दिक्षु तोयं विनिक्षिप्य-ब्राह्मणेष्वमृतं हितं + जातवेदा-मूर्जयन्त्या पुनातु - इत्यनेन शिरसि किञ्चित्प्रक्षिप्य समुद्रं वः प्रहिणोमीति मन्त्रेण वाऽवशिष्टजलं भूमौपातयेत् । ब्रह्मणे दक्षिणां दत्वा अग्न्युपस्थानान्तं कृत्वा —

आहरिष्यामि देवानां सर्वेषां कर्मगुप्तये ।
जातवेदसमेनं त्वां - पुलकैश्छादयाम्यहम् ॥

इति मन्त्रेण वह्निं पुलकैश्छादयेत् । दिनत्रयपर्यन्तं वह्निर्यथा तिष्ठति तथा पुलकाच्छादनं कुर्यात् । पिण्डन्यूनतायां वाताद्यानुकूल्ये वा द्वितीये वा तृतीये वा दिवसे विभूत्युत्पादनपक्षे तदानुकूल्येन पुलकं छादयेत् । प्रथमदिवसे यथाशक्ति ब्राह्मणान्भोजयित्वा वाग्यतः स्वयमपि भुञ्जीत । द्वितीये तृतीये चतुर्थे वा दिवसे प्रातस्स्नात्वा सन्ध्यावन्दनादिकं कृत्वा अनन्तरं शुचिर्भूत्वा शुक्लांबरधरश्शुक्लयज्ञोपवीती शुक्लदन्तः शुक्लमाल्यानुलेपनः सितभस्मदिग्धांगः त्रिपुण्ड्रधारी-अग्निसमीपं गत्वा ओं तद्ब्रह्मेतिमन्त्रेण पौलाख्यं भस्म परित्यज्य आवाहनादिषोडशोपचारान्कुर्यात् । घाते अग्न

इत्यग्निमुपसंहरेत् । अग्नेर्भस्माः अग्नेः पुरीषमसीतिमन्त्रेण उत्तमं भस्म गृहीत्वा अग्निरसीति प्रमृज्य गंगादि सलिलैः कपिलामूत्रेण वा संयोज्य कर्पूरकाश्मीर उशीरचन्दनागरुद्वितयं सूक्ष्मरूपेणचूर्णायित्वा ओमिति ब्रह्मेति मन्त्रेण ओमिति वा भस्मनिक्षिप्य अणोरणीयानिति मन्त्रेण बृहतो वटकान् कुर्यात् ।

अथ वायवीयसंहितोक्त पाशुपतव्रतम् लिख्यते :—

चैत्रे मासि पूर्वपक्षे त्रयोदश्यां शिवक्षेत्रे शुभक्षेत्रारामादौ वा होमस्थलं संपाद्य सम्यक् शुद्धिं कृत्वा स्नानसन्ध्यावन्दनादिकं कृत्वा पूजा-नमस्कारपूर्वकं आचार्यमनुज्ञाप्य विशेषतः शिवपूजां कृत्वा शुक्लांबरधरः शुक्लयज्ञोपवीती शुक्लमाल्यानुलेपनः प्राङ्मुखो वा उदङ्मुखो वा दर्भासने समासीनः दर्भमुष्टिं परिगृह्य प्राणायामत्रयं कृत्वा देवं देवीञ्च ध्यात्वा तदनुज्ञां भावयित्वा पाशुपतव्रतं करिष्ये इति संकल्पं कुर्यात् । यावच्छरीरपातं वा द्वादशाब्धमथापि वा तदर्धं वा मासमेकमथापि वा दिनद्वादशकं वाऽथव्रतं संकल्पनावधीति । तथा च संकल्पकाले उक्तकालमध्ये यावत्कालपर्यन्तं व्रतानुष्ठानसामर्थ्यमस्ति तावत्कालमीश्वरप्रीत्यर्थमिति संकल्पयेत् ।

यद्वा —

> धृतातोयश्चरेदेतद्व्रतं व्रतपरायणः ।
> द्वित्रैकं दिवसं वापि स च कश्चन नैष्ठिकः ॥

इति वचनस्य उत्तरत्र विद्यमानत्वादेवं कुर्यात् ।

अग्निप्रतिष्ठापनादिमुखान्तं स्वगृह्योक्तविधानेन कृत्वा पालाशसमि-द्भिस्तदलाभे अश्वत्थादिसमिद्भिर्वा प्राणापानादिमन्त्रैर्विंशत्याहुतीः जुहुयात् ।

प्राणापानव्यानोदानसमाना मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥ प्राणादिभ्य इदं वाङ्मनश्चक्षुश्श्रोत्रजिह्वाघ्राणरेतोबुद्ध्याकूतिसंकल्पा मे शुद्ध्यन्तां ज्योतिरहं विरजाविपा+माभूयासं+स्वाहा। वागादिभ्य इदं - त्वक्चर्ममांसरुधिरमेधोमज्जास्नायूपस्थानि मे शुद्ध्यन्तां-स्वाहा +त्वगादिभ्य इदं। शिरःपाणिपादपार्श्वपृष्ठोदरजंघाशिश्नोपस्थपायवो मे शुद्ध्यन्तां-स्वाहा धीरक्तादिभ्य इदं उत्तिष्ठपुरुष हरितपिंगलरोहिताक्षि देहि देहि दापयिता मे शुद्ध्यन्तां+स्वाहा। उत्तिष्ठादिभ्य इदं-पृथिव्यप्तेजोवाय्वाकाशा मे शुद्ध्यन्तां स्वाहा - पृथिव्यादिभ्य इदं। शब्दस्पर्शरूपरसगन्धा मे शुद्ध्यन्तां स्वाहा- शब्दादिभ्य इदं। मनोवाक्कायकर्माणि मे शुद्ध्यन्तां स्वाहा - मन आदिभ्य इदं। अव्यक्ता मे शुद्ध्यन्तां स्वाहा - अव्यक्तादिभ्य इदं - आत्मा मे शुद्ध्यन्तां + स्वाहा - आत्मन इदं। अन्तरात्मा मे शुद्ध्यन्तां - स्वाहा। अन्तरात्मन इदं - परमात्मा मे शुद्ध्यन्तां — स्वाहा - परमात्मन इदं क्षुधे स्वाहा। क्षुध इदं क्षुत्पिपासाय स्वाहा - क्षुत्पिपासाय इदं - विविठ्यै स्वाहा। विविट्या इदं ऋग्विधानाय स्वाहा। ऋग्विधानाय इदं घषोत्काय- स्वाहा - घषोत्काय इदं क्षुत्पिपासामलं ज्येष्ठां अलक्ष्मीं नाशयाम्यहं-स्वाहा। क्षुत्पिपासादिभ्य इदं।

अभूतिमसमृद्धिञ्चसर्वान्निर्णुदमे (गृहात्) वापाप्मानं स्वाहा। मन्त्रोक्त- देवताभ्य इदं। अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयात्मा मे शुद्ध्यन्तां स्वाहा। अन्नमयादिभ्य इदं। एवमन्नेन विंशत्याहुतयः - आज्येन च ॥ एवमान्ध्रपाठप्रकारः ॥ द्रविडपाठे तु प्राणापानव्यानोदानसमाना मे शुद्ध्यन्तां स्वाहा। उद्देशत्यागः पूर्ववत् ॥ वाङ्मनश्चक्षुश्श्रोत्रजिह्वाघ्राणरेतोबुद्ध्याकूति-

संकल्पा मे शुद्ध्यन्तां स्वाहा । शिरःपाणिपादपार्श्वपृष्ठोदरजंघाशिश्नोपस्थपायवा मे शुद्ध्यन्तां - स्वाहा । त्वक्चर्ममांसरुधिरमेधास्थिमज्जा मे शुद्ध्यन्तां - स्वाहा । शब्दस्पर्शरूपरसगन्धा मे शुद्ध्यन्तां स्वाहा । पृथिव्यप्तेजोवाय्वाकाशा मे शुद्ध्यन्तां स्वाहा । अन्नमयप्राणमयमनोमयविज्ञानमयआनन्दमया मे शुद्ध्यन्तां - स्वाहा । विविट्यै - स्वाहा । घषोत्काय - स्वाहा । उत्तिष्ठपुरुषा(ष)हरि(त)रोहितपिंगलाक्षि हेहि देहि दापयिता मे शुद्ध्यन्तां - स्वाहा । ओं स्वाहा परमात्मन इदं । एव समिदन्नाज्यैः प्रत्येकं एकादशैकाहुतयः कर्तव्याः । एवं विरजाहोमं कृत्वा अनन्तरं तत्वहोमः कार्यः । तत्प्रकारस्तु अग्निमादाय विधिवद्विराजहोमकारणात् हुत्वाऽज्येन समिद्भिश्च चरुणा च यथाविधि ॥

पूर्णायाः पुरतोभूयः तत्वानां शुद्धिमादिशत् ।
मूलमन्त्रेण जुहुयात्तैरेव समिदादिभिः ॥

तत्वान्येतानि मन्देदहे (मन्मनःदेहश्च) शुद्ध्यन्तामित्यनुसरन् (इति वचनबलेनैवंप्रतीयते) —

आकाशतत्वं मे शुद्ध्यन्तां ज्योतिरहं विरजामि पाप्मा भूयासं
ओं नमश्शिवाय स्वाहा ।

एवमुत्तरत्रापि तत्वशब्द आकाशोपाधिक शिवाय इदम् । वायुर्मे
शुद्ध्यन्तां ज्योतिरहं विरजामि पाप्माभूयासं ओं नमश्शिवाय
स्वाहा ।

वाय्वुपाधिकशिवाय इदम् । एवमुत्तरत्राप्युद्देशत्याग ऊहनीयः ।
अग्निर्मे शुद्ध्यन्तां - ओं नमश्शिवाय स्वाहा ।

आपो मे शुद्ध्यन्तां - ओं नमश्शिवाय स्वाहा ।

पृथ्वी मे शुद्ध्यन्तां - ओं नमश्शिवाय स्वाहा ।

शब्दतन्मात्रं मे शुद्ध्यन्तां - ओं नमश्शिवाय स्वाहा ।

स्पर्शतन्मात्रं मे शुद्ध्यन्तां - ओं नमश्शिवाय स्वाहा ।

रूपतन्मात्रं मे शुद्ध्यन्तां - ओं नमश्शिवाय स्वाहा ।

रसतन्मात्रं मे शुद्ध्यन्तां - ओं नमश्शिवाय स्वाहा ।

गन्धतन्मात्रं मे शुद्ध्यन्तां - ओं नमश्शिवाय स्वाहा ।

श्रोत्रेन्द्रियं तन्मात्रं मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

त्वगिन्द्रियं तन्मात्रं मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

चक्षुरिन्द्रियं तन्मात्रं मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

जिह्वेन्द्रियं तन्मात्रं मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

घ्राणेन्द्रियं तन्मात्रं मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

वागिन्द्रियं तन्मात्रं मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

पाणीन्द्रियं तन्मात्रं मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

पादेन्द्रियं तन्मात्रं मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

पाय्विन्द्रियं तन्मात्रं मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

उपस्थेन्द्रियं तन्मात्रं मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

त्वगिन्द्रियं तन्मात्रं मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

चर्म मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

मांसं मे शद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

रुधिरं मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

मेदो मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

अस्थि मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

मज्जा मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

प्राणो मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

आपानो मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

व्यानो मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

उदानो मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

समानो मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

मनो मे शुद्ध्यन्तां ओं नमश्शिंवाय स्वाहा ।

अहंकारो मे शुद्ध्यन्तां ओं नमश्शिाय स्वाहा ।

ख्यातिर्मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

सत्वं मे शुद्ध्यन्तां -ओं नमश्शिवाय स्वाहा ।

रजो मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

तमो मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

प्रकृतिर्मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

पुरुषो मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

रागो मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

विद्या मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

कला मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

नियतिर्मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

कालो मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

माया मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

शुद्धविद्या मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

महेश्वरो मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

सदाशिवो मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

शक्तिः मे शुद्ध्यन्तां ओं नमश्शिवाय स्वाहा ।

शिवतत्वं मे शुद्ध्यन्यां ओं नमश्शिवाय स्वाहा ।

ज्योतिरहं विरजाविपाप्मा भूयासं ओं नमश्शिवाय स्वाहा ।

शिवतत्वोपाधिकशिवाय इदम् ॥

एवं समिदन्नाज्यैः प्रत्येकं जुहुयात् ॥

अत्रवचनानि :–

पञ्चभूतानि - तन्मात्रा (णि) पञ्चकर्मेन्द्रियाणि च ।
ज्ञानकर्मविभेदेन (विभागेन) पञ्च पञ्च विभागशः ॥

त्वगादिधातवस्सप्त पञ्चप्राणादिधातवः ।
मनश्चाहंकृतिः ख्यातिर्गुणाः प्रकृतिपूरुषौ ॥

रागोविद्याकलाचेति नियतिः कालएव च ।
मायाच शुद्धविद्या च महेश्वरसदाशिवौ ॥

शक्तिश्च शिवतत्वञ्च तत्वानि क्रमशोविदुः ।
"मन्त्रैश्च विरजैर्हुत्वा होताऽसौविरजोभवेत्" ॥

इति गोमयमादाय पिण्डं कृत्वाऽभिमन्त्र्य च न्यस्याग्नौ तच्च संरक्ष्य" दिने तस्मिन्हविष्यभुक्" इति च वचनेन पिण्डंकृत्वाऽभिमन्त्र्यचेति-विद्यमानत्वात् दर्शे सायंप्रातः दोहवत् पिण्डविषये मन्त्रावृत्तिं कुर्यात् । तत्रादौ पूर्वमेव प्रशस्तं गोमयमादाय प्रशस्तगोमूत्रेण संयुज्य हस्तेन सम्यक् पेषणंकृत्वा तत्रत्य-बीजक्षुद्रपाषाणादीन्बहिर्निरस्य संयक् पिण्डं कृत्वा शुद्धपात्रे निधाय तरुण-किरणैस्संयक् शोषणं कृत्वा विद्यमानान्पिण्डान् तत्पात्रेण सह आनीय हस्तेन स्पृष्ट्वा "आगाव" इत्यादि मन्त्रान्जपेत् । "आगाव+दुहानाः गावो भगः+ वदिन्द्रम् । तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियोयोनः प्रचोदयात् । गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं । ईश्वरीं सर्वभूतानां तामिहोपह्वये-श्रियम् ॥ श्रीर्मेभवतु अलक्ष्मीर्मे नश्यतु । सन्त्वा सिञ्चामि यजुषा प्रजामायुर्धनञ्च ॥ पञ्चानाम्त्वा पातानां यन्त्राय धत्राय गृह्णामि । पञ्चानांत्वर्तूनां यन्त्राय धत्रायगृह्णामि । पञ्चानाम्त्वादिशां + गृह्णामि । पञ्चानांत्वा पञ्चजनानां + गृह्णामि । परेस्त्वा पञ्चबलस्य गृह्णामि । ब्रह्मणस्त्वातेन्द्रवेद्ध+ गृह्णामि । क्षत्रस्थत्वौजसे यन्त्राय-धत्राय गृह्णामि । विश्वेश्वरत्वा यन्त्राय धन्त्राय गृह्णामि । सुवीर्यायत्वा गृह्णामि । सुप्रजास्त्वा यत्वा गृह्णामि । रायस्पोषायत्वा गृह्णामि । ब्रह्मवर्चसायत्वागृह्णामि । भूरस्माकं हविर्देवानामाशिषो यजमानस्य देवानान्त्वा देवताभ्यो गृह्णामि । कामायत्वा गृह्णामि । न्यस्याग्नाविति विद्यमानत्वादनुक्तमविरुद्धमन्यतो ग्राह्यमिति न्यायात् ॥

अग्नौ न्यासप्रकारः मन्त्रेणैव प्रतीयते —

मन्त्रस्तु —

"पिण्डांश्चनिक्षिपेत्तत्र आद्यन्तं प्रणवेन तु ।<br>
षडक्षरस्य मन्त्रस्य व्यावृत्तस्य तथाक्षरैः ॥<br>
स्वाहान्तैर्जुहुयात्तत्र तत्तद्देवाय पिण्डकान् ॥" इति ॥

पद्मोत्तरखण्डे —

विद्यमानत्वादाद्यन्तं प्रणवेन अग्नौ प्रक्षिपेत्। मन्त्रस्य षडक्षरस्य व्यावृत्तस्याक्षरैस्-स्वाहान्तैर्जुहुयात् वर्णदेवाय पिण्डकानिति ॥

बृहज्जाबालोपनिषद्वाक्यस्य च विद्यमानत्वादेवं पिण्डाहुतिप्रकारः ॥

ओं स्वाहा परमात्मन इदम्। ओं स्वाहा नं स्वाहा इन्द्राय इदं। मं स्वाहा - रुद्राय इदं। शिं स्वाहा - विष्णव इदम्। वां स्वाहा ब्रह्मण इदं। यं स्वाहा - स्कन्दाय इदं। पुनरपि - यं स्वाहा, वां स्वाहा, शिंस्वाहा, मं स्वाहा, नं स्वाहा, ओं स्वाहा। इतरान् तूष्णीमेव प्रक्षिपेत्। इन्द्रो रुद्रो हरिर्ब्रह्मा स्कन्दः तेषाञ्च देवताः। इति वायवीयसंहितायाम्। एवमुपरिष्टात्तन्त्रं कृत्वा अग्न्युपस्थानञ्च कृत्वा,

"आहरिष्यामि देवानां सर्वेषां कर्मगुप्तये।
जातवेदसमेनं त्वां पुलकैः छादयाम्यहम् ॥"

इति मन्त्रेण वह्निं पुलकैः छादयेत्। दिनत्रयपर्यन्तं वह्निर्यथा तिष्ठति यथा भस्मनि धावल्यं भवति तथा पुलकैः आच्छादनं कुर्यात्। दिने - तस्मिन्" हविष्यभुगि"ति वचनात् "त्रयोदश्यां हविष्याशी भूत्वा सायन्तनकर्म निर्वृत्य पञ्चाक्षरजपसाम्बशिवध्यानादिकं कृत्वा मौनीसन् रात्रौ भूमौ अग्निसमीपे शयीत। प्रभाते चतर्दश्यां कृत्वा सर्वं पुरोदितम् दिने तस्मिन्निराहारः कालशेषं समापयेत्" इति वचनाच्च चतुर्दश्यामपि ब्राह्मे मुहूर्ते उत्थाय गुरुध्यानं साम्बशिवध्यानञ्च कृत्वा कृतस्नातः कृताह्निकः वैशेषिकीं शिवपूजाञ्च - कृत्वाऽग्निमुखञ्च कृत्वा समिदन्नाज्यैः विरजाहोमं कृत्वा तैरेव

तद्धोमञ्च कृत्वोत्तरांगञ्च कृत्वा पूर्ववद्वह्निं संरक्ष्य तस्मिन्दिवसे निराहारस्सन् कालशेषं पञ्चाक्षरादिजप सांबशिवध्यानादिना - पूराणपठनादिना च नयेत् । प्रातः पर्वणि चाप्येवं कृत्वा होमावसानतः उपसंगृह्य रुद्राग्निं गृह्णीयात् भस्म यत्नतः" इति वचनेन तृतीयदिवसेऽपि ब्राह्मे मुहूर्ते उत्थाय गुरुशिवध्यानादिपूर्वकं शौचस्नान सन्ध्यावन्दनादिकं कृत्वा अग्निसमीपं गत्वा मुखान्तं कृत्वा समिदन्नाज्यैः विरजाहोमं तत्वहोमञ्च पूर्ववत्कृत्वा स्विष्टकृत्प्रभृत्युत्तरांगानि कृत्वा "याते अग्ने इत्यग्निं उपसंहरेत् । उत्तराङ्गानि च प्रधानाहुत्यनन्तरं हविषा स्विष्टकृज्जयादि होमः परिध्यञ्जनलेपकार्यम्- प्रस्तरप्रहरणं तृणप्रहरणं निर्देशनमभ्यभिमन्त्रणं भूमौ निमृष्ठिः परिधिः प्रहरः संस्रापहोमः प्रायश्चित्ताहुतयः । सप्तते अग्न" - इति पूर्णाहुतिः । प्राणायामः परि षेचनं । प्रणीतामोक्षः ब्रह्मणोद्वासनं समारोपणं तृतीय दिवस एव । अग्न्युपसंहारात्पूर्वमेव ओंतत् (मत्) ब्रह्मेति बृहज्जाबालपाद्मपुराण- योर्विद्यमानत्वेन तेन मन्त्रेण पौलाख्यं भस्म परित्यजेत् । तस्यपूजां कुर्यात् । ततः "आवाहनमुखानुपचारांस्तु षोडश" इति विद्यमानत्वात् - परशिव- स्वरूपाग्निदेवतानां प्रत्यावाहनादिषोडशोपचारान्कृत्वा "अनन्तरमग्निसमारोपं- गृह्णीयात् भस्म यत्नतः" इति प्रकृतग्रन्थे विद्यामानत्वात् "अग्नेर्भस्मासि अग्नेः पुरीषमसि" (इति) उत्तमं भस्म गृहीत्वा शुद्ध पात्रे निधाय "अग्नि- रसी"ति प्रमृज्य गंगादिसलिलैः कपिलामूत्रेण वा संयोज्य कर्पूरकाश्मीर - कुंकुमउशीर चन्दनागरुद्वितयं सूक्ष्मरूपेण चूर्णयित्वा "ओमि"ति "ब्रह्मे"ति मन्त्रैः ओमिति वा भस्मनि निक्षिप्य "अणोरणीयान्महतो महीया" निति मन्त्रेण ब्रहतो वटकान् कुर्यात् गंगादि सलिलाभावे तूष्णीमेव भस्म स्थापयेत् ।

यावत्संख्याकदिनपर्यन्तं व्रतसंकल्पः तावद्दिनपर्यन्तं जटीवा मुण्डो वा शिखामात्रजटीवा भवेत् । ननु गृहस्थस्य मुण्डनं कथं सशिखवपनमिति-चेन्न । सत्रविशेषे प्रायश्चितविशेषे च गृहस्थस्यापि मुण्डनस्य विहितत्वादत्रापि व्रतांगत्वेन मुण्डनादिकं विहितम् ॥ विकल्पेन वस्त्रविषये वीतलज्जश्चे द्दिगम्बरः यद्वा काषायवसनः अथवा चीराम्बरधरः चर्मी वा एकाम्बरो वा, वल्कली वा दण्डी मेखली वा चेति अविकल्पः । यद्वा पूर्वत्रापि जटादिविषये वस्त्रादिविषये च व्यवस्थितविकल्पः । गृहस्थश्चेत् । शिखामात्रजटी एकाम्बरधरः दण्डधारी मेखली सन् वर्तते । अयं व्रतनिष्ठ इति लोकस्य ज्ञापनार्थं पूजार्थं च । वानप्रस्थाश्रमी चेत् जटीवल्कली चीरांबरधरो वा दण्डी मेखली चेति सर्वत्र साधारणं ॥ सन्यासीचेन्मुण्डः दिगम्बरः काषाय वसनो वा चर्मी वा । ननु सन्यासिनो होमाधिकाराभावादिदं व्रतं कथमिति चेत्सत्यम् । हस्तपादादिवच्छिछ्य इति न्यायाच्छिछ्यमुखेन होमादि संभवः । यद्वा सन्यासकाल एव विरजाहोमस्य(मं) कृत्वा तत्वहोमस्य(मं) जपद्वारानिवर्तयितुं शक्यत्वात्, गृहस्थेभ्यः विभूतिग्रह(ण) संभवात् । यद्वा गृहस्थस्सन् विरक्तो यदि पाशुपतव्रतधारणार्थं प्रवृत्तं तेन सर्वं क्रमेण कर्तुं शक्यम् । तथाहि पूर्वं जीवश्राद्धादिकं कृत्वा विराजाहोमं तत्वहोमं पिण्डहोमं च कृत्वा अग्निमुपसंगृह्य विभूतिं संगृहीत्वा प्रेषोच्चारणं कृत्वा दिगम्बरः काषायवसनो वा गृहाद्बहिर्गत्वा कालत्रयेप्याथर्वणोक्तप्रकारेण व्रतमाचरन्नेकवारं भैक्षाचरणमाचरन्यावदायुषं वर्तते सर्वात्मना वैराग्याभावे शिखामात्रजटी स्नात्वा एकांबरो दण्डधारी मेखली सन् पादप्रक्षालनपूर्वकं आचमनं कृत्वा अंगन्यासकरन्यासौ, पंचाक्षरेण कृत्वानन्तरं विध्युक्तप्रकारेण

नित्यशिवपूजानन्तरं व्रताङ्गत्वेन स्फटिकलिंगं संपाद्य विधिना प्रतिष्ठाप्य नवरत्नखचिततया सौवर्णं पद्मं सकर्णिकं सकेसरं सदलञ्च संपाद्य पूजयित्वा यथाविभवं विधिना प्रतिष्ठाप्य तदभात्रे रक्तवस्त्रं पद्मं सितभस्म सितपद्मं वा संपाद्य तत्कर्णिकायां प्रतिष्ठितं कनीयसं स्फटिकं लिङ्गं स्थापयित्वा सतिविभवे शिवपूजादिद्रव्यं यदस्ति तत्सर्वं प्रयत्नेन संपाद्य रणञ्च (घण्टारवञ्च) भावयित्वा यथाशक्ति ब्राह्मणेभ्यो द्रव्यं दत्वा पूजाशेषं समापयेत् ॥ अनन्तरं पूर्वोक्तपूजासाधन-बिल्वपत्रपद्मादिद्रव्यनियमः तेषां संख्यानियमः ॥ अनन्तरमस्य धूप-दीपादौ विशेषः अनन्तरं नैवेद्यात्पूर्वं आवरणपूजा अनन्तरं महानैवेद्यं अनन्तरं ताम्बूलादिकं नीराजनान्तं । अन्यद्राजोपचारञ्च कृत्वा स्तोत्रजपप्रदक्षिणनमस्कारादिकञ्च कृत्वा लिङ्गतः देवमुद्रास्य अनन्तरमग्निपूजाञ्च कृत्वाऽग्निञ्चोपास्य कृत्यशेषं कुर्यात् । एवमेवं(व)-संकल्पितव्रतदिनेषु अग्न्युत्पादन विरजाहोम तत्वहोमाश्च कार्याः । अनन्तरं व्रताङ्गत्त्वेन पूजितं लिङ्गं गुरवे दद्यात् शिवालये वा स्थापयेत् । अनन्तरं गुरुं प्रति भक्तपूजादिनानार्थतोषमनन्तरंयजमानस्य भोजनशयनादिनियमः । एतत्सर्वं वायवीयसंहितायां पूर्वभागे एकोन-त्रिंशाध्याये स्फुटः स एष (अत्र) लिख्यते :—

ऋषय :—

भगवन्श्रोतुमिच्छामो व्रतं पाशुपतं परम् ।

ब्रह्मादयोऽपि यत्कृत्वा सर्वे पाशुपतास्स्मृताः ॥

वायु :–

रहस्यं वः प्रवक्ष्यामि सर्वपाशनिकृन्तनम् ।
व्रतं पाशुपतं श्रैतमथर्वशिरसि शक्तम् (श्रुतं) ॥

कालश्चित्रापौर्णमासी देशः शिवपरिग्रहः ।
क्षेत्रारामादिरन्योवा प्रशस्तश्शुभलक्षणः ॥

तत्र पूर्वं त्रयोदश्यां सुस्नातस्सुकृताह्निकः ।
अनुज्ञाप्य स्वमाचार्यं संपूज्य प्रणिपत्य च ॥

पूजां वैशेषिकीं कृत्वा शुक्लांबरधरस्स्वयम् ।
शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः ॥

दर्भासने समासीनो दर्भमुष्टिं प्रगृह्यच ।
प्राणायामत्रयं कृत्वा प्राङ्मुखो वाप्युदङ्मुखः ॥

ध्यात्वा देवञ्च देवीञ्च तद्विज्ञापनवर्त्मना ।
व्रतमेतत्करोमीति भवेत्संकल्प्य दीक्षितः ॥

यावच्छरीरपातं वा द्वादशाब्दमथापि वा ।
तदर्धं पाददग्धं वा मासद्वादशकन्तु वा ॥

तदर्धंपाददग्धं वा मासमेकमथापि वा ।
दिनंद्वादशकं वाऽथ व्रतसंकल्पनावधि ॥

अग्निमादाय विधिवद्विरजाहोमकारणात् ।
हुत्वाज्येन समिद्भिश्च चरुणा च यथाक्रमम् ॥

पूर्णायाः पुरतो भूयः तत्वानां शुद्धिमादिशत् ।
पञ्च भूतानि तन्मात्रा पञ्चकर्मेन्द्रियाणि च ॥

ज्ञानकर्मविभेदेन पञ्च पञ्च विभागशः ।
त्वगादिधातवस्सप्त पञ्चप्राणादि वायवः ॥

मनश्चाहंकृतिःख्यातिर्गुणाः प्रकृतिपूरुषौ ।
रागो विद्या कलाचैव नियतिः काल एव च ॥

माया च शुद्धविद्या च महेश्वरसदाशिवौ ।
शक्तिश्च शिवतत्वञ्च तत्वानि क्रमशो विदुः ॥

मन्त्रैस्तु विरजैर्हुत्वा होतासौ विरजो भवेत् ।
अथ गोमयमादाय पिण्डीकृत्वाऽभिमन्त्र्य च ॥

न्यस्याग्नौ तञ्च संरक्ष्य दिने तस्मिन्हविष्यभुक् ।
प्रभाते तु चतुर्दश्यां कृत्वा सर्वं पुरोदितम् ॥

दिने तस्मिन्निराहारः कालशेषं समापयेत् ।
प्रातः पर्वणि चाप्येवं कृत्वा होमावसानतः ॥

उपसंगृह्य रुद्राग्निं गृह्णीयाद्भस्म यत्नतः ।
ततस्तु जटिलो मुण्डश्शिखैकजटएव वा ॥

भूत्वा स्नात्वा पुनर्वीतलज्जश्चेत्स्याद्दिगम्बरः ।
अन्यः काषायवसनश्चर्मी चीराम्बरोऽथवा ॥

एकांबरो वल्कली वा भवेद्दण्डी च मेखलः ।
प्रक्षाल्य चरणौ पश्चाद्द्विराचम्यात्मनस्तनुम् ॥

सकलीकृत्य तद्भस्म विरजानल संभवम् ।
अग्निरित्यादिभिर्मन्त्रैः षड्भिराथर्वणैः क्रमात् ॥

विमृज्याङ्गानि मूर्धादिचरणान्तश्च तैः स्पृशेत् ।
ततस्तेन क्रमेणैव समुद्धूल्य च भस्मना ॥

सर्वाङ्गोद्धूलनं कुर्यात्प्रणवेन शिवेन वा ।
ततस्त्रिपुण्ड्रं रचयेत्क्रियायुष समाह्वयम् ॥

शिवभागं समागम्य शिवयोगमथाचरेत् ।
कुर्यात्त्रिसन्ध्यमप्येवं एतत्पाशुपतं व्रतम् ॥

भुक्तिमुक्तिप्रदश्चैतत्पशुत्वं विनिवर्तयेत् ।
तत्पशुत्वं परित्यज्य कृत्वा पाशुपतं व्रतम् ॥

पूजनीयो महादेवो लिङ्गमूर्तिस्सनातनः ।
पद्ममष्टदलं हैमं नवरत्नैरलङ्कृतम् ॥

कर्णिकाकेसरोपेतमासनं परिकल्पयेत् ।
विभवे तदभावे तु (वा) रक्तं सितमथापि वा ॥

पद्मस्याप्यभावेतु केवलं भावनामयम् ।
तत्पद्मकर्णिकामध्ये कृत्वा लिङ्गं कनीयसम् ॥

स्फाटिकं पीठिकोपेतं पूजयेद्विद्रस्त्रं क्रमात् ।
प्रतिष्ठाप्य विधानेन तल्लिंगं कृतशोभनम् ॥

परिकल्प्यासनं मूर्त्तिं पञ्चवक्त्रप्रकारतः ।
पञ्चगव्यादिभिर्पुण्यैर्यथाविभवसंभृतैः ॥

स्नापयेत्कलशैर्दिव्यैस्सहस्रादिषु संभवैः ।
गन्धद्रव्यैस्सकर्पूरैश्चन्दनाद्यैस्सकुंकुमैः ॥

सवे(वै)दिकं समालिप्य लिङ्गभूषणभूषितम् ।
बिल्वपत्रैश्च पद्मैश्च रक्तैश्श्वैतैस्तथोत्पलैः ॥

नीलोत्पलैस्तथान्यैश्च पुष्पैस्तैस्तैस्सुगन्धिभिः ।
पुण्यैः प्रशस्तैश्चित्रैश्च पत्रैर्दूर्वाक्षतादिभिः ॥

समभ्यर्च्य यथालाभं महापूजाविधानतः ।
धूपदीपं तथा चार्घ्यं नैवेद्यं च विशेषतः ॥

निवेदयित्वा विभवे कल्याणञ्च समाचरेत् ।
इष्टानि तु विशिष्टानि न्यायेनोपार्जितानि तु ॥

सर्वद्रव्याणि देयानि व्रते तस्मिन्विशेषतः ।
श्रीपद्मोत्पलपत्राणां संख्या साहस्रकी मता ॥

प्रत्येकमपरा संख्या शतमष्टोत्तरं द्विजाः ।
तत्रापि च विशेषेण न त्यजेद्बिल्वपत्रिकाम् ॥

हैममेकं परं प्राहुः पद्मपत्रसहस्रकम् ।
नीलोत्पलादिष्वप्येतत्समानं बिल्वपत्रकम् ॥

पुष्पान्तरेण नियमो यथालाभं निवेदयेत् ।
अष्टाङ्गमायुत्कृष्टं धूपालेपौ विशेषतः ॥

कृष्णागरूरघोराख्ये वक्त्रे सद्ये मनश्शिला ।
चन्दनं वामदेवाख्ये हरितालञ्च पौरुषे ॥

ऐशाने भसितं केचित् आलेपनमिति भृशम् (श्रुतम्) ।
न धूप इति मन्यन्ते धूपान्तरविधानतः ॥

सितागरुमघोराख्ये मुखे कृष्णागरुं पुनः ।
पौरुषे गुग्गुलुं सद्ये सौम्ये सौंबिकं मुखे ॥

ईशानने तु शीतारिं दद्याद्धूपं विशेषतः ।
शर्करामधुकर्पूरकपिलाघृतसंयुतः ॥

चन्दनागरुकोष्टाद्यं सामान्यं संप्रचक्षते ।
कर्पूरवर्त्तिराज्याद्या देयो दीपावलिस्ततः ॥

अर्घ्यमाचमनं देयं प्रतिवक्त्रमतः परम् ।
प्रथमावरणे पूज्यौ क्रमाद्धेरम्बषण्मुखौ ॥

ब्रह्माङ्गानि ततश्चैव प्रथमावरणे चिते ।
द्वितीयावरणे पूज्याः विघ्नेशाश्चक्रवर्त्तिनः ॥

तृतीयावरणेपश्चाद्भवाद्याश्चाष्टमूर्तयः ।
महादेवादयः तत्र तथैकादशमूर्तयः ॥

चतुर्थावरणे पूज्यास्सर्व एव गणेश्वराः ।
वह्निरेव तु पद्मस्य पञ्चमावरणे क्रमात् ॥

दशदिग्पतयः पूज्यास्सशास्त्रानुचरास्तथा ।
ब्रह्मणो मानसाः पुत्राः सर्वेषां जोतिषां गणाः ॥

सर्वे देवाश्च देव्यश्च सर्वास्सर्वेऽपि खेचराः ।
पातालवासिनश्चान्ये सर्वे मुनिगणाऽपि ॥

योगिनो गुरवस्सर्वे पञ्च गोमातरस्तथा ।
क्षेत्रपालश्च सगणस्सर्वञ्चैतच्चराचरम् ॥

अथावरणपूजान्ते संपूज्य परमेश्वरम् ।
साज्यं सव्यञ्जनं हृद्यं हविर्भक्त्या निवेदयेत् ॥

मुखवासादिकं दत्वा ताम्बूलं सोपदंशकम् ।
अलङ्कृत्य च भूयोऽपि नानापुष्पविभूषणैः ॥

नीराजनान्तं विस्तीर्य पूजाशेषं समापयेत् ।
चषकं सोपहारञ्च शयनञ्च समर्पयेत् ॥

यद्यन्नृपोचितं हृद्यं तत्सर्वमनुरूपतः ।
कृत्वा च कारयित्वा च कृत्वा च प्रतिपूजनम् ॥

स्तोत्रं पापहरं जप्त्वा विद्यां पञ्चाक्षरीं जपेत् ।
प्रदक्षिणं प्रणामञ्च कृत्वात्मानं समर्पयेत् ॥

ततः पुरस्ताद्देवस्य गुरुबिम्बे च पूजयेत् ।
दत्वार्घ्यमष्टो पुष्पाणि देवमुद्रास्य लिंगतः ॥

अन्नैश्चाग्निं च संपूज्य यथोद्वास्य तमच्युत ।
प्रत्यहं जनयित्वैवं कुर्यात्सर्वं पुरोदितम् ॥

ततस्तत्सांबुजं लिङ्गं सर्वोपकरणान्वितम् ।
समर्पयेत्स्वगुरये स्थापयेद्वा शिवालये ॥

संपूज्य च गुरुनन्यान्व्रतिनश्च विशेषतः ।
भक्तान्द्विजांश्च शक्तश्चेद्दीनाननाथांश्च तोषयेत् ॥

स्वयंचानशनप्रायं फलमूलाशनोऽपि वा ।
पयोव्रती वा भिक्षाशी भवेदेकाशनस्तथा ॥

नक्तं युक्तासनो नित्यं भूशयो विरतश्शुचिः ।
भस्मशायी तृणेशायी चीराजिनशयोऽथवा ॥

ब्रह्मचर्यव्रतो नित्यं व्रतमेतत्ससाचरेत् ।
अर्कवारे तथार्द्रायां पञ्चम्यां च पक्षयोः ॥

अष्टम्यां च चतुर्दश्यां शक्तावुपवसेदपि ।
पाषण्डपतितदस्युसूतिकान्त्यजपूर्विकान् ॥

वर्जयेत्सर्वयत्नेन मनसा कर्मणा गिरा ।
क्षमा दानं दया सत्यमहिंसाशीलस्सदाभवेत् ॥

सन्तुष्टश्च प्रशान्तश्च जपध्यानरतस्तथा ।
कुर्यात्त्रिषवणस्नानं भस्मस्नानमथापि वा ॥

पूजां वैशेषिकीञ्चैव कर्मणा मनसापि वा ।
बहुनात्र किमुक्तेन नाचरेदशिवं व्रती ॥

प्रमादात्तु तदाचारे निरूप्य गुरुलाघवम् ॥
उचितं निष्कृतिं कुर्यात्पूजाहोमजपादिभिः ॥

आसमाप्तेः व्रती चैवमाचरेन्न प्रमादतः ।
गोदानञ्च वृषोत्सर्गं कुर्यात्पूजाञ्च संसदः ॥

सामान्यमेतत्कथितं व्रतस्यास्य समासतः ।
प्रतिमासं विशेषञ्च प्रवदामि यथाक्रमम् ॥

वैशाखे वज्रलिङ्गन्तु ज्येष्ठे मरतकं शुभम् ।
आषाढे मौक्तिकं विद्याच्छ्रावणे नीलनिर्मितम् ॥

मासे भाद्रपदे चैव पद्मरागमयं परम् ।
आश्वयुजि च विधिवद्गोमेधकमयं शुभम् ॥

कार्तिक्यां वैद्रुमं लिङ्गं वैडूर्यं मार्गशीर्षके ।
पुष्यरागमयं पुष्ये मासे तु मणिजं रवेः ॥

फाल्गुन्यां चन्द्रकान्तोत्थं माघे तद्वृत्योऽथवा ।
सर्वगन्धमयं वाथ लिङ्गं कुर्याद्यथारुचि ॥

व्रतावसानसमये समाचरितनैत्यकः ।
कृत्वा वैशेषिकीं पूजां हुत्वा चैव यथापुरा ॥

संपूज्य पूज्यानाचार्यान्व्रतिनश्च विशेषतः ।
देशिकेनाप्यनुज्ञातः प्राङ्मुखोवाप्युदङ्मुखः ॥

दर्भासीनो दर्भपाणिः प्राणापानौ नियम्य च ।
जपित्वा शक्तितो मूलं ध्यात्वा सांबं त्र्यम्बकम् ॥

अनुज्ञाप्य यथापूर्वं नमस्कृत्य कृताञ्जलिः ।
समुत्सृजामि भगवन्व्रतमेतत्त्वाज्ञया ॥

इत्युक्त्वोदीर्य मुलं तु दर्भानुत्तरतस्त्यजेत् ।
ततो दण्डजटाचीरमेखलाद्यपि चोत्सृजेत् ॥

पुनराचम्य विधिवत्पञ्चाक्षरमुदीरयेत् ।
यः कृत्वात्यन्तकीं दीक्षां आदेहान्तमनाकुलः ॥

व्रतमेतत्प्रकुर्वीत स तु वै नैष्ठिकस्स्मृतः ।
सोऽत्याश्रमीति विज्ञेयो महापाशुपतस्तथा ॥

स एव तपसां श्रेष्ठस्स एव तु महाव्रती ।
न तेन सदृशः कश्चित्कृतकृत्यो मुमुक्षुषु ॥

यतिश्चेन्नैष्ठिको जातस्तमाहुर्नैष्ठिकोत्तमाः ।
यो नाश्नद्द्वादशाहं वा व्रतमेतत्समाचरेत् ॥

सोऽपि नैष्ठिकतुल्यस्स्यात्तीव्रव्रतसमाह्वयात् ।
घृताक्तो यश्चरेदेतद्व्रतं व्रतपरायणः ॥

द्वित्रैकदिवसो वापि स तु कश्चन नैष्ठिकः ।
कृत्यमित्येव निष्कामो यश्चरेद्व्रतमुत्तमम् ॥
शिवार्पितात्मा सततं न तेन सदृशः क्वचित् ॥

भस्म(च्छ)न्नो द्विजो विद्वान्महापातकसंभवैः ।
पापैर्विमुच्यते सद्यो मुच्यते च न संशयः ॥

रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्तितम् ।
तस्मात्सर्वेषु लोकेषु वीर्यवान्भस्म संयुतः ॥

भस्मनिष्ठस्य दह्यन्ते दोषा भस्माग्निसंगमात् ।
भस्मस्नानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः ॥

भस्मसंदिग्धसर्वाङ्गो भस्मदीप्तस्त्रिपुण्ड्रकः ।
भस्मशायी च पुरुषो भस्मनिष्ठ इति स्मृतः ॥

भूतप्रेतपिशाचाश्च रोगाश्चातीव दुस्सहाः ।
भस्मनिष्ठस्य सान्निध्याद्विद्रवन्ति न संशयः ॥

भासनाद्भसितं प्रोक्तं भस्म कल्मषभक्षणात् ।
भूतिर्भूतिकरी पुंसां रक्षा रक्षाकरी परम् ॥

किमन्यदिह वक्तव्यं भस्ममाहात्म्यकारणम् ।
व्रती च भस्मना स्नातस्स्वयंदेवो महेश्वरः ॥

परमास्त्रं च शैवानां भस्मैतत्परमेश्वरम् ।
धौम्याग्रजस्य तपसि व्यापदोयंनिवारितः ॥

तस्मात्सर्वप्रयत्नेन कृत्वा पाशुपतव्रतम् ।
धनवद्भस्म संगृह्य भस्मस्नानकरो भवेत् ॥

**कौर्मे पञ्चविंशोऽध्याये पुत्रमुद्दिश्यपरमेश्वरप्रसा – दार्थं तपःकर्तुमागतं श्रीकृष्णं प्रत्युपमन्यु :–**

"स्वागतन्ते हृषीकेश तपांसि सफलानि नः ।"

इत्यादिना कृष्णं स्तुत्वाऽनन्तरं पाशुपतयोगमुक्तवान् –

एवमुक्त्वा ददौ ज्ञानमुपमन्युर्महामुनिः ।
व्रतं पाशुपतं योगं कृष्णायाक्लिष्टकर्मणे ॥

स तेन मुनिवर्येण व्याहृतो मधुसूदनः ।
तथैव तपसा देवो रुद्रमाराधयत्प्रभुम् ॥

भस्मोद्धूलितसर्वांगो जटी वलकलसंवृतः ।
जजाप रुद्रमीशानं शिवैकाहितमानसः ॥ इति ॥

तत्रैव पूर्वं चतुर्दशाध्याये :—

शिखण्डिनो भवत्पुत्रश्शुशील इति लिङ्गतः ।
धार्मिको रूपसंपन्नो वेदवेदाङ्गपारगः ॥

सोऽधीत्य विधिवद्वेदान्धर्मेण तपसि स्थितः ।
मतिश्चक्रे भाग्ययोगात्सन्यासं प्रति कर्मवित् ॥

स कृत्वा तीर्थसंसेवां स्वाध्याये तपसि स्थितः ।
जगाम हिमवत्पृष्ठं कदाचित्सिद्धसेवितम् ॥

तत्र धर्मवनं नाम धर्मसिद्धिप्रदं वनम् ।
अपश्यद्योगिनां संयमगम्यं ब्रह्मविद्विषाम् ॥

तत्र मन्दाकिनी नाम सुपुण्या विपुला नदी ।
पद्मोत्पलवनोपेता सिद्धाश्रमविभूषिता ॥

स तस्यां दक्षिणे तीरे मुनीन्द्रैर्योगिभिर्वृतम् ।
सुपुण्यमाश्रमं रम्यं अपश्यत्प्रीतिसंयुतः ॥

मन्दाकिनीजले स्नात्वा संतर्प्य पितृदेवताः ।
अर्चयित्वा महादेवं पुष्पैः पद्मोत्पलादिभिः ॥

ध्यात्वार्कसंस्थमीशानं शिरस्यादायचाञ्जलिः ।
संप्रेक्ष्यमाणो भास्वन्तं तुष्टाव परमेश्वरम् ॥

रुद्राध्यायी गिरीशस्य रुद्रस्य चरितेन च ।
अन्यैश्च विविधैस्तोत्रैः छान्दसैर्वेदसंभवैः ॥

अथास्मिन्नन्तरे पश्यन्समायान्तं महामुनिम् ।
श्वेताश्वतरनामानं महापाशुपतोत्तमम् ॥

भस्मना दिग्धसर्वाङ्गः कौपीनवाच्छादनान्वितम् ।
तपसा कर्शितात्मानं शुक्लयज्ञोपवीतिनम् ॥

समाप्य संस्तपं शम्भोरानन्दाश्रुविलोचनः ।
ववन्दे शिरसा पादौ प्राञ्जलिर्वाक्यमब्रवीत् ॥

धन्योस्म्यनुग्रहीतोऽस्मि यन्मे साक्षान्मुनीश्वर ।
योगीश्वरायद्दष्टोऽसौ योगी योगविदां वर ॥

अहो मे सुमहद्भाग्यं तपांसि सफलानि मे ।
किं करिष्यामि शिष्योऽहं तवाहं पालयानघ ॥

सोऽनुगृह्याथ राजानं सुशीलं शीलसंयुतम् ।
शिष्यत्वे परिजग्राह तपसा क्षीणकल्मषम् ॥

सन्यासिकं विधिं कृत्स्नं कारयित्वा विचक्षणः ।
ददौ तदैश्वरं ज्ञानं स्वशाखाभिहितं व्रतम् ॥

अशेषवेदसारं तत्पशुपाशविमोचनम् ।
अत्याश्रममितिख्यातं ब्रह्मादिभिरनुष्ठितम् ॥ इति ॥

ततस्त्वमपि राजेन्द्र तपोयोगसमन्वितः ।
आस्व नित्यं मया सार्धं ततस्सिद्धिमवाप्स्यसि ॥

एवमातोष्य विप्रेन्द्रो देवं ध्यात्वा पिनाकिनम् ।
आचचक्षे महामन्त्रं यथावत्स्वार्थसिद्धये ॥

सर्वपापोपशमनं वेदसारं विमुक्तिदम् ।
अग्निरित्यादिकं पुण्यं ऋषिभिस्संप्रकीर्तितम् ॥

सोऽपि तद्वचनाद्राजा सुशीलः श्रद्धयान्वितः ।
साक्षात्पाशुपतो भूत्वा वेदाभ्यासरतोऽभवत् ॥

भस्मोद्धूलितसर्वाङ्गः कन्दमूलफलाशनः ।
शान्तो दान्तो जितक्रोधः सन्यासविधिमाश्रितः ॥ इति च ॥

भस्मधारणविधि :-

अत्र "सन्यासिकविधिं कृत्स्नं कारयित्वा विचक्षणः" इतीत्यादि वचनेन शिष्यत्वेन परिगृहीतस्य सुशीलस्य राज्ञो ज्ञानसाधनत्वेन विहितपाशुपतात्याश्रमादिशब्दवाच्यं यत् भस्मधारणरूपं व्रतं तद्व्रताङ्गत्वेन तदर्थभस्मोत्पादकत्वेन श्वेताश्वतरनामा ऋषिः विरजाहोमादिकं कारयित्वा तं राजानं प्रति विभूतिधारणाङ्गमन्त्रानग्निरिति भस्म वायुरिति भस्मेत्यादिकानपि उपदिष्टवानिति प्रतीयते । ननु कथं सन्यासिकविधिशब्देन विरजाहोमः प्रतीयते । सन्यासकाले विरजाहोमस्यावश्यकत्वादिति ब्रूमः ।

अथ विभूतिधारणविधिः प्रदर्श्यते —

भस्मचाग्निहोत्रसमुद्भवं विरजानलजं अन्यद्वा भस्मोत्पादनव्यवस्था प्रकरणद्वये निरूपितम् । यद्यस्य योग्यं तद्भस्म गृहीत्वा शुद्धे पात्रे स्थापयित्वा

पादप्रक्षालनहस्तप्रक्षालनञ्चकृत्वा द्विराचम्य प्राणायामत्रयं कृत्वा पात्रे-विद्यमानं भस्म सद्यो जातादि पञ्च ब्रह्ममन्त्रैर्दक्षिणहस्तेन गृहीत्वा वामहस्ते निक्षिप्य दक्षिणहस्तेन स्पृष्ट्वा अग्निरिति भस्म वायुरिति भस्म जलमिति भस्मस्थलमिति भस्मव्योमेति भस्म सर्वं हवा इदं भस्म मन इत्येतानि चक्षूंषि भस्मानीति त्रिवारं जपेत् । अनन्तरं शुद्ध-पात्रस्थजलं दक्षिणकरेण स्पृष्ट्वा आपो वा इदँसर्वं विश्वा भूतान्यापः प्राणा वा आपः पशवः आपोऽमृतमापोऽन्नमापो सम्राडापो विराडाप-स्स्वराडापश्छन्दांस्यापो ज्योती ँष्यापो यजूँष्यापस्सत्यमापस्सर्वा देवता आपो भूर्भुवस्सुवरापओम् - ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोमिति मन्त्रद्वयं जपित्वा तज्जलं विष्णुरूपेण विभाव्य तज्जलं भस्मनि निक्षिप्य "मानस्तोक" इति मन्त्रेण मिश्रणं कृत्वा पिण्डरूपेण कृत्वा तद्भस्म साम्ब-ब्रह्मरूपेण ध्यात्वा तदर्धं गृहीत्वा दक्षिणजानुनि निधाय पुनः वामकरे विद्यमानं अर्धं षोढा कृत्वा तत्रैकं गृहीत्वा "ईशानस्सर्वविद्यानां ईश्वरस्सर्व-भूतानाम् " ॥ "ब्रह्माधिपति र्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्" इति शिरसि प्रादक्षिण्येन लेपनं कुर्यात् । पुनर्भागान्तरं गृहीत्वा "तत्पुरुषायविद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयादि"ति मुखेलेपनं । भागान्तरं गृहीत्वा "अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वस्सर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः" इति नानादेशं बाहुद्वयञ्च लेपयेत् । भागान्तरं गृहीत्वा" वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नम इति नाभेरधः कटिप्रदेशञ्च

लेपयेत् । अनन्तरं अवशिष्टभागं गृहीत्वा "सद्योजातं प्रपद्यामि सद्यो जाताय वै नमो नमः - भवे भवेनातिभवे भजस्व मां भवोद्भवाय नम इति" दक्षिणोत्तरपादद्वयं लेपयेत् । अनन्तरमवशिष्टभागं गृहीत्वा हस्ताभ्यां लोढयित्वा प्रणवेन सर्वाङ्गं लेपयेत् । हस्तौ प्रक्षाल्याचमनद्वयं कृत्वा जानुनि विद्यमानं गृहीत्वा तेन साम्बब्रह्मरूपतया भावितेन हस्ताभ्यां लोडितेन भस्मना तर्जनीमध्यमानामिकांगुलित्रयेण वा तर्जन्यनामिकाभ्यां अङ्गुष्ठेन वा अनुलोमप्रतिलोमेन त्रिपुण्ड्रं ब्रह्मविष्णुरुद्रात्मकं कालाग्निरुद्रोपनिषदुक्तप्रकारेण गार्हपत्याकाराद्यात्मकञ्च भावयित्वा शिरोललाटवक्षस्कन्देषु त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं यद्देवानां त्र्यायुषं तन्मेऽस्तुत्र्यायुषं । "त्र्यंबकं यजमाहे सुगन्धिं पुष्टिवर्धनं उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात्" ओं नमश्शिवाय इति मन्त्रत्रयेण त्रिपुण्ड्रधारणं कुर्यात् । एवं कालत्रयेऽपि कुर्यात् । त्रिपुण्ड्रधारणान्तेऽपि भस्म प्रक्षालनं कृत्वा तज्जलंभूमौ न निपातयेत् ॥ आचमनं कृत्वा तदनन्तरं कर्मान्तरं कुर्यात् । अत्र उद्धूलनस्य स्नानरूपत्वादाचमनकरणम् ।

उक्तञ्च शिवराघवसंवादे –

उद्धूलयेत्समस्ताङ्गं प्रणवेन विचक्षणः ।
प्रक्षाल्य हस्तावाचम्य दर्भपाणिस्समाहितः ॥

नीलकण्ठाय शिरसि क्षिपेत्सर्वात्मने नमः ।
प्रक्षाल्य च ततो हस्तौ क्रमानुष्ठानमाचरेत् ॥ इति ॥

ब्रह्मचारिणां त्रिपुण्ड्धारणसमये "मेधावीत्यादि" मन्त्राः । मेधावी-तेजस्वी - वर्चस्वी - ब्रह्मवर्चस्वी - आयुष्मान् - भूयासं स्वस्ति । परमहंसस्य तु जलमिश्रणं विना उद्धूलनं । त्रिपुण्ड्धारणसमये - ओं ओं ओं हंस हंस इति मन्त्रस्सर्वत्र ।

कालाग्निरुद्रोपनिषदि –

अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः तं पप्रच्छ । अधीहि भगवन् त्रिपुण्ड्विधिं स तत्वं किं द्रव्यं किं प्रमाणं किं तत्वं किं स्थानं का रेखा; के मन्त्राः का शक्तिः क कर्ता किं दैवतं किं वलमिति तं होवाच भगवान् कालाग्निरुद्रः ।

यद्द्रव्यं तदाग्नेयं भस्म सद्योजातमिति पञ्च ब्रह्ममन्त्रैः परिगृह्य अग्निरित्यनेन ऋचाऽभिमन्त्र्य मानस्तोक इति मन्त्रेण समुद्धृत्य जलेन संमृज्य त्र्यायुषमिति शिरोललाटवक्षस्कन्देषु त्र्यायुषैस्त्र्यंबकैस्तिर्यक् तिस्रो रेखाः प्रकुर्वीत । व्रतमेतच्छांभवं । सर्वत्रेदेषु वेदवादिभिरुक्तम् भवति । तस्मात्तत्समाचरेत् मुमुक्षुरपुनर्भवाय ।

अथ सनत्कुमारः प्रमाणमस्य त्रिपुण्ड्धारणस्य त्रिधा रेखाः आललाटात् आचक्षुराभ्रुवोरामूध्द्नोर्मध्यतश्च । याऽस्यप्रथमारेखा गार्ह-पत्यश्च । आकारो रजो । भूर्लोकाश्चात्मा क्रियाशक्तिः ऋग्वेदः प्रातस्सवनं महेश्वरो देवतेति । यास्य द्वितीयारेखा सा दक्षिणाग्नि-रुकारस्सत्वमन्तरिक्षं अन्तरात्मा इच्छाशक्तिः यजुर्वेदो माध्यंन्दिनं

सवनं सदाशिवो देवतेति । यास्य तृतीया रेखा सा आहवनीया । मकारस्तमोद्यौर्लोकः परमात्मा ज्ञानशक्तिः सामवेदः तृतीय सवनं शिवो देवतेति ।

बृहज्जाबालोपनिषदि :–

इशानेन शिरोदेशं मुखन्तत्पुरुषेण तु ।
उरोदेशमघो सारेण गुह्यं वामेन धूलयेत् ॥
सद्योजातेन पादौ च सर्वाङ्गं प्रणवेन तु ॥

अत्रैते श्लोका :–

भस्ममुष्टिं समादाय संहितामन्त्रमन्त्रिताम् ।
मस्तकात्पादपर्यन्तं मलस्नानं पुरोदितम् ॥

तन्मन्त्रेणैव कर्तव्यं विधिस्नानं समाचरेत् ।
ईशानेन पञ्चधा भस्म विकरे मूर्ध्नि यत्नतः ॥

मुखे च चतस्रस्तत् पुरुषेणाघोरेणाष्टधा हृदि ।
वामेन गुह्यदेशे तु त्रिदशस्थान भेदतः ॥

अष्टधा सद्यमन्त्रेण पादमुद्धूल्य यत्नतः ।
सर्वाङ्गोद्धूलनं कार्यं राजन्यस्य यथाविधि ॥

मुखं विना च तत्सर्वं उद्धूल्य क्रमयोगतः ।
सन्ध्यात्रये निशीथे च तथा पूर्वावसानयोः ॥

सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम् ।
स्त्रियं नपुंसकं गृध्रं बिडालं बकमूषिकम् ॥

स्पृष्ट्वा तथाविधानन्यान्भस्म स्नानं समाचरेत् ।
देवाग्निगुरुविप्राणां समीपे त्याज्य दर्शने ॥

अशुद्धभूतले मार्गे कुर्यान्नोद्धूलनं व्रती ।
शंखतोयेन मूलेन भस्मना मिश्रणं भवेत् ॥

योजितश्चन्दनेनापि वारिणा संयुतं तु वा ।
चन्दनेन समं लिम्पेत् ज्ञानर्थी चूर्णमेव तत् ॥
मध्याह्नात्प्राक्जलैर्युक्तं तोयं तदनुवर्जयेत् ॥

**अथ भूयो भगवन्तं कालाग्निरुद्रं त्रिपुण्ड्रविधिं पप्रच्छ ॥**

**तत्रैते श्लोका :-**

त्रिपुण्ड्रं कारयेत्पश्चात् ब्रह्मविष्णुशिवात्मकम् ।
मध्याङ्गुलिभिरादाय तिसृभिर्मूलमन्त्रितम् ॥

अनामामध्यमांगुष्ठै रथवास्यात्रिपुण्ड्रकम् ।
उद्धूलयेन्मुखं विप्रः क्षत्रियस्तु शिरोदितम् ॥
द्वात्रिंशत्स्थानके चाथ षोडशस्थानकेऽथवा ॥

अष्टस्थाने तथा चैवं पञ्चस्थानेऽपि योजयेत् ।
उत्तमाङ्गे ललाटे च कर्णयो नेत्रयोस्तथा ॥

नासावक्त्रगलेष्वेवमंसद्वयमनन्तरम् ।
कूर्परे मणिबन्धे च हृदये पार्श्वयोर्द्वयोः ॥

नाभौ गुह्यद्वये चैव ऊर्वोऽस्थितिर्विप्रजानुनि ।
जङ्घाद्वये च पादौ च द्वात्रिंशत्स्थानमुत्तमम् ॥

अष्टमूर्त्यष्टविद्येशदिक्पालान्वसुभिस्सह ।
धरोद्ध्रुवश्च सोमश्चापश्चैवानलोऽनिलः ॥

प्रत्यूषश्च प्रभासश्च वसवोऽष्टावुदीरिताः ।
एतेषां नाम मन्त्रेण त्रिपुण्ड्रं धारयेद्बुधः ॥

विदद्वयाद्षोडशस्थाने त्रिपुण्ड्रं तु समाहितः ।
शीर्षके च ललाटे च कण्ठे चांसद्वयेऽपि च ॥

कूर्परे मणिबन्धे च हृदये नाभिपार्श्वयोः ।
पृष्ठे चैव प्रतिष्ठाया जपेत्तत्रापि देवताः ॥

शिवं शक्तिश्च सादाख्यमीशं रुद्राख्यमेव च ।
वामादिनवशक्तिश्च एता षोडशदेवताः ॥

नासत्योदस्रकश्चैवमश्विनौ द्वौ समीरितौ ।
अथवा मूर्ध्न्यलीके च कर्णयोश्चसने तथा ॥

बाहुद्वये च हृदये नाभ्यामूर्वोर्युगन्तथा ।
जानुद्वये च पदयोः पृष्ठभागे च षोडश ॥

शिवश्चेन्द्रश्च चन्द्रार्कौ विघ्नेशो विष्णुरेव च ।
श्रीश्चैव हृदये तद्वत्तथा नाभौ प्रजापतिः ॥

नागाश्च नागकन्याश्च उभये ऋषिकन्यकाः ।
पादयोश्च समुद्राश्च तीर्थाः पृष्ठेऽपि चास्तकः ॥

एवं वा षोडशस्थानं अष्टस्थानमथोच्यते ।
गुरुस्थानं ललाटं च कर्णद्वयमनन्तरम् ॥

अंसयुग्मञ्च हृदयं नाभिरित्यष्टमं भवेत् ।
ब्रह्मा च ऋषयस्सप्त देवताश्च प्रकीर्तिताः ॥

अथवा मस्तकं बाहू हृदयं नाभिरेव च ।
पञ्चस्थानान्यमून्याहुर्भस्मतत्वविदो जनाः ॥

यथाहुः संभवतः कुर्याद्देशकालाद्यपेक्षया ।
उद्धूलनेप्यशक्तश्चेत्रिपुण्ड्रादीनि कारयेत् ॥

ललाटे हृदये नाभौ गले च मणिबन्धयोः ।
बाहुमध्ये बाहुमूले पृष्ठेचैव च शीर्षके ॥

ललाटे - ब्रह्मणे नमः ।
हृदये – हव्यवाहनाय नमः ।
नाभौ – स्कन्दाय नमः ।
गले – विष्णवे नमः ।
दक्षिणबाहुमूले – रुद्राय नमः ।
मध्ये – आदित्याय नमः ।

मणिवन्धे – शचीपतये नमः ।
वामबाहुमूले – वामदेवाय नमः ॥
मध्ये प्रभञ्जनाय नमः । मणिवन्द्धे वसुभ्यो नमः ।
पृष्ठे हराय नमः । शिरसि परमात्मने नमः ।

इत्यादिभिर्मन्त्रैरेव द्वादशस्थानेषु त्रिण्ड्ं धारयेत् ।
त्रिनेत्रं त्रिगुणाधानं त्रयाणां जनकं विभुम् ॥
स्मरन्नमश्शिवायेति ललाटे तु त्रिपुण्ड्रकम् ॥

कूर्पराधः पितृभ्यान्तु महेशाभ्यां तथोपरि ।
ईशाभ्यां नम इत्युक्त्वा पार्श्वयोश्च त्रिपुण्ड्रकम् ॥

बीजाभ्यां नम इत्युक्त्वा धारयेच्च प्रकोष्ठयोः ।
भीमायेति ततः पृष्ठे शिवाय पिठरे तथा ॥

नीलकण्ठाय शिरसि क्षिपेत्सर्वात्मने नमः ।
"मानस्तोकेने"ति मन्त्रेण मन्त्रितं भस्म धारयेत् ॥

ऊर्ध्वपुण्ड्रं भवेत्साम मध्यपुण्ड्रं यजूंषि च ।
अधःपुण्ड्रं ऋचस्साक्षात्तस्मात्पुण्ड्रं त्र्यायुषम् ॥

त्र्यायुषाणि कुरुते ललाटे च भुजद्वये ।
नाभौ शिरसि हृत्पार्श्वे ब्राह्मणाः क्षत्रियास्तथा ॥

**जाबालोपनिषदि** –

अग्निरित्यादिभिर्भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् । इति ॥
तथोपरि तिर्यक् त्रिपुण्ड्रं धारयेदिति च ।

अथर्वशिरसि – व्रतमेतत्पाशुपतं अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वंह्वाइदं भस्म मन इत्येतानि चक्षूंषि भस्मानि अग्नि अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् । तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षायेति ।

अत्र जाबालोपनिषदादीनामुपब्रह्मकवचनानि

सूतसंहितायाम् —

अग्निरित्यादिभिर्मन्त्रैः जाबालोपनिषद्गतैः ।
सप्तभिर्धूलनं कार्यं भस्मना सजलेन च ॥
त्र्यायुषेण मन्त्रेण द्विजास्तिर्यक् त्रिपुण्ड्रकम् ॥

धार्यं प्रोक्तं द्विजश्रेष्ठ धार्मिकैर्वेदपारगैः ।
धावीत्यादिना वापि ब्रह्मचारी दिने दिने ॥

भस्मना सजलेनैव धारयेच्च त्रिपुण्ड्रकम् ।
धारयेद्भिक्षुको नित्यं इति जाबालकी श्रुतिः ॥

ललाटे चैव दोर्द्वन्द्वे तत्रैवोरसि बुद्धिमान् ।
त्रिपुण्ड्रं धारयेन्नित्यं भुक्तिमुक्तिफलप्रदम् ॥

वर्णानामाश्रमाणाञ्च मन्त्रतोऽमन्त्रतोऽपि वा ।
त्रिपुण्ड्रोद्धूलनं प्रोक्तं जाबालिरा(लेरा)दरेणत्विति ॥

बोधायन सूत्रे -

अथ तद्भस्म आदाय अभिमन्त्रयेत् ।

ईशानः + शिवोम् । तत्पु + थात् ।

अघो + रुद्ररूपेभ्यः । वाम + नमः ।

सद्यो + नमः । पुनरेवाभिमृशति ।

"सद्योजातमिति" पञ्चभिः "मानस्तोके" इति मध्यमानामि-
काङ्गुष्ठैस्समादाय तूष्णीमद्भिस्समुदायुज्य त्र्यायुषमिति त्रिपुण्ड्रं धारयेत् ।

अथ उदाहरति -

ललाटे हृदि दोर्द्वन्द्वे गले कुक्षौ शिरस्यथ ।

धारयेच्चाथ तद्भस्म द्विजो नित्यमतन्द्रितः ॥ इति ॥

भूत्यै न प्रमदितव्यमिति विज्ञायते ।

अथाप्युदाहरति -

मध्यमानामिकाङ्गुष्ठैस्त्रिपुण्ड्रं भस्मनाकृतम् ।

.... .... .... .... तत्त्रिपुण्ड्रं भवेच्छस्तम् ॥ इति ॥

अथ त्र्यम्बकमिति सर्वाङ्गं सम्मृजेत् - पूतोभवति ॥ इति ॥

बोधायनस्मृतौ :–

स्नानमीशानमन्त्रेण कुर्यान्मूर्धादिपादतः । इति ॥

भारद्वाजस्मृतौ :–

प्राङ्मुखश्चरणौहस्तौ प्रक्षाल्याचम्य पूर्ववत् ।
प्राणानायम्य संकल्प्य भस्मस्नानं समाचरेत् ॥

आदाय भसितं श्वेतं अग्निहोत्रसमुद्भवम् ।
ईशानेन तु मन्त्रेण स मूर्द्धनि विनिक्षिपेत् ॥

तत आदाय तद्भस्म मुखं तत्पुरुषेण तु ।
अघोराख्येन हृदये गुह्ये वामाह्वयेन च ॥

सद्योजाताभिधानेन भस्म पादद्वये क्षिपेत् ।
सर्वाङ्गं प्रणवेनैव मन्त्रेणोद्धूलयेत्ततः ॥

एतदाग्नेयकं स्नानमुदितं परमर्षिभिः ।
सर्वकर्मसमृद्ध्यर्थं कुर्यादादाविदं बुधः ॥

ततः प्रक्षाल्यहस्तादीनुपस्पृश्य यथाविधि ।
तिर्यक्त्रिपुण्ड्रं विधिना ललाटे हृदये गले ॥

पञ्चभिर्ब्रह्मभिर्वापि कृतेन भसितेन च ।
कृत्वाग्निहोत्रजेनैव भस्मना तु सकृन्नरः ॥
धृतमेतत्त्रिपुण्ड्रं स्यात्सर्वकर्मसु पावनम् ॥ इति ।

मध्यांगुलित्रयेणैव सदक्षिणकरस्य तु ।
षडङ्गुलायतं मानं अपि वालीकमानकं ।
नेत्रयुग्मप्रमाणेन फाले दीप्तं त्रिपुण्ड्रकम् ॥

कदाचिद्भस्मना कुर्यात्सरुद्रो नात्र संशयः ।
अकारोऽनामिकाप्रोक्ता ह्युकारो मध्यमाङ्गुलिः ॥

मकारस्तर्जनी तस्मात्त्रिभिःकुर्यात्त्रिपुण्ड्रकम् ।
मध्यमानामिकाङ्गुष्टैरनुलोमविलोमतः ॥

धारयेद्यस्त्रिपुण्ड्रांकं स रुद्रो नात्रसंशयः ।

स्मृतिरत्नावल्यां :–

मध्यमानमिकाङ्गुष्टैर्ललाटे यत्रिपुण्ड्रकम् ।
तत्रिपुण्ड्रं भवेच्छस्तं महापातकनाशनम् ॥ इति ॥

वासिष्ठलैंगे :–

अग्निरित्यादिभिर्मन्त्रैः षड्भिराथर्वणैस्तथा ।
जाबालैस्सप्तभिर्वापि गौणेनैवतु वर्त्मना ॥

उद्धूलयेत्स्वकं देहं पापपुञ्जभयापहम् ।
[illegible] मन्त्रेण मेधावीत्यादिनाऽथवा ॥

[illegible] भस्मना धार्यं त्रिपुण्ड्रं ब्रह्मचारिणाम् ।
[illegible] मन्त्रेण सतारेण तथैव च ।
[illegible] मन्त्रेण प्रणवेन युतेन च ॥

ललाटे हृदयेचैव दोर्द्वन्द्वे च महामुने ।
त्रिपुण्ड्रं धारयेन्नित्यं गृहस्थश्च वनाश्रमी ॥

[illegible] हंसेन प्रणवेन समाहितः ।
त्रिपुण्ड्रं धारयेन्नित्यं सन्यासाश्रममाश्रितः ॥

नमोऽन्तेन शिवेनैव शूद्रश्शुश्रूषणे रतः ।
उद्धूलनं त्रिपुण्ड्रञ्च नित्यं भक्त्या समाचरेत् ॥

अन्येषामपि सर्वेषां विना मन्त्रेण सुव्रत ।
उद्धूलनं त्रिपुण्ड्रञ्च कर्तव्यं भक्तितो मुने ॥

शंकरसंहितायाम् :-

भस्मना सजलेनैव धारयेच्च त्रिपुण्ड्रकम् ।
उत्तमाङ्गे ललाटे च गले वक्षसि नाभिके ॥
उभयोः पार्श्वयोश्चैव भुजयोरुभयोस्तथा ॥

बाहुमध्ये च करयोः पृष्ठे ककुदि भूसुराः ।
धृतं पञ्चदशस्थाने त्रिपुण्ड्रं येन केन वा ॥
सशिवस्सहरिर्ब्रह्मा स वन्द्यो वापि पातकी ।

शिवधर्मे :-

सितेन भस्मना कुर्यात्त्रिसन्ध्यं यस्त्रिपुण्ड्रकं ।
स सर्वपा (प) निर्मुक्तशिशवलोकेमहीयते ॥

रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्तितम् ।
ध्वंसनं सर्वदुःखानां सर्वपापविशोधनम् ॥

योगीसर्वाङ्गकस्नानमापादतलमस्तकम् ।
त्रिसन्ध्यमाचरेन्नित्यं स वै योगीमवाप्नुयात् ॥

मानवीयसंहितायाम् —

प्रातःकाले च मध्याह्ने सायाह्ने च त्रिपुण्ड्रकम् ।
सितेन भस्मना कुर्यात्स रुद्रो नात्रसंशयः ॥

लैङ्गे –

मानस्तोकेतिमन्त्रेण ललाटादिषु पञ्चसु ।
स्थानेषु मध्यमानामिकाङ्गुष्ठांगुलीभिर्लिखेत् ॥

अङ्गुष्ठं मध्यतःकृत्वा सृष्टिसंहारयोर्वुधः ।
एवं विधिविभूत्यैव धारयेद्यस्त्रिपुण्ड्रकम् ॥

स रुद्रकर्मकर्ता हि त्रयीमय इति (श्रुतिः) शक्तिः ।
सुप्रभेदे जलस्नानं भस्मस्नानमतःपरम् ॥

जलस्नानेस्वशक्तश्चेद्भस्मस्नानं समाचरेत् ।
प्रक्षाल्यपादौ हस्तौचाप्याचम्य पुनराचमेत् ॥

भस्म वामकरे स्थाप्य दक्षिणेनाभिमन्त्रयेत् ।
सद्यादिमन्त्रैस्तैरेव भस्मनोद्धूलनं चरेत् ॥

ईशानेन शिरोदेशं मुखे तत्पुरुषेणतु ।
उरोदेशमघोरेण नाभिं वामेन तत्परम् ॥

सद्योमन्त्रेण सर्वाङ्गं समुद्धूल्य विचक्षणः ।
पूर्ववस्त्रं परित्यज्य शुद्धवस्त्रं परिगृह्येत् ॥

प्रक्षाल्य पादौ हस्तौ च पश्चादाचमनं चरेत् ।
भस्मनोद्धूलनाभावे त्रिपुण्ड्रं तु विधीयते ॥

मध्याह्नात्प्राक्जलैर्युक्तं परतांजलवर्जितम् ।
तर्जन्यनामिकामध्यैस्त्रिपुण्ड्रं तु समाचरेत् ॥

मूर्धाचैव ललाटश्च कर्णौ कण्ठस्तथैव च ।
हृदयं चैव बांहूच नाभिस्थानं तथोच्यते ॥

पंञ्चाङ्गुलैर्न्यसेन्मूर्ध्नि प्रासादेन तु मन्त्रतः ।
त्र्यंगुलैर्विन्यसेत्फाले शिरोमन्त्रेण देशिकः ॥

सद्येन दक्षिणे कर्णे वामदेवेन वामतः ।
अघोरेण तु कण्ठे च मध्याङ्गुल्या स्पृशेद्बुधः ॥

हृदयं हृदयेनैव त्रिभिरङ्गुलिभिः स्पृशेत् ।
विन्यसेद्दक्षिणेबाहौ शिखामन्त्रेण देशिकः ॥

वामबाहौ न्यसेद्धीमान्कवचेन त्र्यङ्गुलैः ।
मध्येन संस्पृशेन्नाभिमीशानाभिधमन्त्रतः ॥

ब्रह्मविष्णुमहेशानास्तिस्रो रेखा इति स्मृताः ।
अधो ब्रह्मा ततो विष्णुस्तत ऊर्ध्वं महेश्वरः ॥

एकाङ्गुलेन न्यस्तं यदीश्वरस्तत्र देवताः ।
शिरोमध्ये स्वयं ब्रह्मा ईश्वरस्तु ललाटके ॥

कर्णयोरश्विनौ देवौ गणेशस्तु गले तथा ।
हृदि चण्डीश्वरः प्रोक्तो बाह्वोर्वासुकितक्षकौ ॥

नाभौ प्रजापतिश्चैव भावयेदधिदैवतम् ।
ब्राह्मणस्तु समुद्धूल्य त्रिपुण्ड्रं धारयेत्ततः ॥

क्षत्रियश्च तथावैश्यश्शूद्रश्चोद्धूलनं त्यजेत् ।
सर्वेषामन्त्यजातीनां मन्त्रेण रहितं भवेत् ॥
अदीक्षितमनुष्याणामपि मन्त्रं विना भवेत् ॥ इति ॥

ब्रह्मकैवर्तके —

धार्यं भस्म सदाग्निहोत्रजमिदं यद्वैदिकं वैदिकै-
स्तिर्यक्पुण्ड्रतया ललाटफलके वक्षस्थले मस्तके ।
याह्योर्मन्त्रपुरस्सरं क्रतुशतं तैरेव संयक्कृतं
स्नानं तीर्थसहस्रकोटिषु धरादत्तानवद्येऽखिला ॥

श्रौतं भस्म धृतं ललाटफलके दृष्टिं समुत्पादये-
न्मूर्धिन्येतद्वितनोति चन्द्रसकलं कण्ठे सितं लाञ्छनम् ।
पार्श्वे योषितमातनोति भुजयोरेणं त्रिशूलं तनौ-
व्याघ्रेभाजिनराजताद्रिवृषभानन्तेनवद्येर्पयेत् ॥

लिङ्गं दिव्यमणिस्सितश्च भसितं सिद्धौषधं वैदिकं
पञ्चावर्णः प्रणवेन साद्धयफलदो मन्त्रो मनूनां वरः ।
मुक्तिस्त्रीमुखवश्यकर्मणि यतस्तस्यान्तु शक्ति-
त्रयं जह्यान्ने(नै)वकदापि यावदवशा प्रीता ततस्सा स्वयम् ॥

भस्मश्रुतं महोदयं नरवरोयत्रेति तत्रेश्वरो
गौर्यायास्तु तमर्चयत्यनुदिनं तेनार्चितः शङ्करः ।
तस्मै दत्तमथाक्षयस्य हि भवेन्मुक्तोऽनवद्यापरो
मुक्तिन्नैवलभेत् सहस्रजननं जातोप्यभस्माक्षवान् ॥

रुद्राग्नेर्जगतां हिताय परमं सम्यक्समुद्धं शिवो
रक्षार्थं परिपावनार्थमददाद्दिव्यैतु भस्माऽमलं ।
सद्यो भूतपिशाचराक्षसगणप्रेतोरगक्ष्वेलभृ-
त्कीटव्याघ्रकफोष्णमृत्युशमनं स्वस्वार्थदं मंगलम् ॥

भस्मस्नानमनेकपापशमनं मुख्यं जलस्नानतो
बाह्याभ्यन्तरशुद्धिकृद्भवभयप्रध्वंसकृद्दर्शनात् ।
सर्वव्याधिमलापकर्षणपटुश्श्रौतानलोत्पत्ति-
र्यद्विष्णुब्रह्मशत(क्रतु) प्रभृतिभिर्मूर्ध्नानवद्यं धृतम् ॥

आदाय वैतानिकभस्म शुद्धं समित्समुद्धं विरजाग्निजञ्च ।
औपासनाग्निप्रभवं विशुद्धे निधारयेच्चेलवल्के च पात्रे ॥

प्रक्षाल्य पादौ च विमृज्य तोयं पवित्रपाणिस्सुसमाहितश्च ।
विनिश्यदर्भेष्वथ पूर्ववत्कृदुदङ्मुखो भस्म करे निधाय ॥

पञ्चब्रह्ममनुञ्जपेत् - अथ पुनः प्राणान्नियम्य त्रिधा आग्नेयानथ तैस्त्रिवारं अखिलैस्समं मन्त्रयेत्सप्तभिः । ओभापस्सलिले नियोज्य च जपन्नग्न्यादिभिः मार्जयेदापादं शिरसो भुजद्वयमपि ध्यायंश्च सांबं शिवं उद्धूलनं पापहरंपुरस्तात्स्नानोपमं ह्याच (म) नं विधाय अग्न्यादिभिस्तत्सितभस्मवारि मध्याङ्गुलीभिस्तु वर्तमानं । अनामिकाङ्गुष्ठकमध्यमाभिः त्र्यम्बकेनायुत पञ्चवर्णकैःलिखेल्ललाटेह्यनुलोमविलोमतो वा विधिवत्त्रिपुण्ड्रकम् ॥

यथाल्ललाटे हृदये च कुक्षौ
      सुदोर्द्वये ब्रह्महरीश्वरीयम् ।
अयंगृहस्थस्य वनंगतस्य
      विधिः पुनर्वर्णिन उच्यते च ॥

समित्समुत्थं विरजाग्निजञ्च
      वैतानिकं वर्णिन एव नान्यत् ।
पूर्वोक्तमन्त्रैः जलयुक्तभस्म
      त्र्यायुषेणैव भवेच्चधार्यम् ॥

भिक्षुस्त्विरोंकारयुतात्ममन्त्र
      -हंसेनपुण्ड्रंविदधीततिर्यक् ।
शूद्रश्शिवेनैव नमोन्तकेन
      कुर्यात्त्रिपुण्ड्रं परिद्धूलनञ्च ॥

सच्छोत्रियाणां वचनाग्निजेन
      वस्त्रावधूतेन सितेन नित्यम् ।
दावाग्निजं शूद्रजनः परेषा -
      ममन्त्रकं धार्यमुशन्ति भस्म ॥

कन्या नार्यो भस्म पञ्चाक्षरेण ध्यात्वा
      साम्बं धार्यमुद्धूलनञ्च ।
कार्यं प्राहुः केवलं मोक्षसिद्ध्यै
      भस्मश्शृतं नो समिल्लौकिके एव ॥

विप्राणां सलिलेन धार्यमुचितं भस्मत्रिकालेष्वपि स्त्रीभिश्चोज्झल-वर्जितं। प्रति वनस्थानामंगनानामिदं दीक्षाहीननृणाञ्चवारिसहितं मध्याह्नतः प्राक् स्मृतं सर्वेषां सममेतदाहुरपरे सन्तोऽनवद्ये विधिम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याभिनवनारायणेन्द्रसरस्वतीपूज्यपादशिष्य
श्रीमत्परमशिवेन्द्रसरस्वतीविरचितं
भूतिमाहात्म्यं सम्पूर्णम् ॥

॥ ओं नमश्शिवायसिद्धम् ॥

॥ शुभमस्तु ॥



# வேண்டுகோள்



கருணையுள்ளங்கொண்ட நம் முன்னோர்கள், அரிய பெரிய இலக்கியங்களையும், பிறவற்றையும், பனையோலைகளில் எழுதிச் சுவடிகளாக நமக்குத் தந்தனர். அவைகள், பல்வேறு இடங்களில் உள்ளன. சுவடிகள் பழுதடைவதற்குமுன் எம்மிடம் அன்பளிப்பாகக் கொடுத்துதவினால், அவைகள் மக்களுக்குப் பயன்படும்.

எம்மிடம் கொடுப்பதன் மூலம், சுவடி தந்தவர்களும், சுவடி எழுதியோரும் அழியாப் புகழை, எமது சரசுவதி மகால் உள்ளளவும் பெறுவர். அவை பதிப்பாக வருமாயின், சுவடி தந்தார் பெயரும் இடம் பெறுவதோடு, அப்பதிப்பில் 5 பிரதிகளும் பெறுவர்.

எனவே, "நாம் பெற்ற பேறு பெறுக இவ்வையகம்" என்ற எண்ணமுடைய நற்பண்பாளர்கள் தம்மிடமுள்ள சுவடிகளை, எமது மகாலுக்குத் தந்துதவ வேண்டுகிறோம்.

இங்ஙனம்,

**ஆர். சந்திரபதி, I. A. S.,**
*மாவட்ட ஆட்சியர் & இயக்குநர்,*
*சரசுவதி மகால் நூலகம்.*

*தஞ்சாவூர்,*
*21—8—83.*

